# प्रस्तावना ।

एतत्सूक्तरत्नावलीप्रणेतृणां श्रीमदकब्बरपातसाहि–समर्पितजगद्गुरुविरुद–श्रीहीरविजयसूरिपट्ट–गगनाङ्गणगभस्तिमालिनां निष्प्रतिम-प्रतिभाशालिनां वाचंयमचूडामणीनां श्रीविजयसेनसूरीणां सत्तासमयस्तु अस्यैव ग्रन्थस्य पञ्चशततमेन—

"वर्षे मुनि[७]र्युग[४]नर[१६]पति–मिते तपागच्छजलधिशशिसदृशैः ।
श्रीविजयसेनसूरि–द्विरदैर्निरमायि निर्मायैः ॥"

इत्येतेन पद्येन विक्रमार्कीयसप्तदशशताब्दीरूपे एतद्ग्रन्थनिर्माण-काले सिद्धे स्फुटतया सिद्ध एव ।

एतेषामभिजनादिविशेषवृत्तान्तस्तु विजयप्रशस्तिमहाकाव्यादितोऽवगन्तव्यः ।

विजयप्रशस्तिकाव्यवृत्तिप्रशस्तिगतस्य त्रिपञ्चाशत्तमपद्यस्यावलोकनेन तु 'श्रीहेमविजयगणिः सूक्तरत्नावल्याः कर्ता' इत्यधिगम्यते । परमत्र हेमविजयनाम्नोऽनधिगमात् सा सूक्तरत्नावली एतदन्यैव स्यादिति प्रतिभात्यस्माकम् । अन्यच्च, यदेकमेवास्याः पुस्तकं न्यायाम्भोनिधिश्रीविजयानन्दसूरिशिष्य–पूज्यपादप्रवर्त्तकश्रीमत्कान्तिविजयमुनीनां सकाशादुपलब्धम्, तदवसानगतेन—

"इति श्रीतपागच्छाधिराजभट्टारकसार्वभौमभट्टारकश्रीहीरविजयसूरीश्वरपट्टालंकारश्रीविजयसेनसूरिविरचिता सूक्तरत्नावली संपूर्णा ॥ लिखिता श्रीसूरतिबन्दिरे ॥ संवद्द्विपाशुगमुनीन्दु ( १७५८ ) प्रमिते संवत्सरे ॥"

इत्येतेनोल्लेखेनाऽपि श्रीविजयसेनसूरीणामेव कृतिरियं सूक्तरत्नावलीति विशदमेव । तत्त्वं पुनस्तद्विदो वेद्यमिति विरमामः ।

स्वदेशगमनाद्दूरवर्तित्वेनाऽस्य जनस्य, [illegible] यप्रदानेन महान्तं धन्यवादमर्हन्ति प्रवर्त्तकपादपा [illegible] चेतसश्चतुरविजयाभिधाना मुनिप्रवरा इत्यपि न सूचनानर्हम् ।

पूर्वोक्तस्य एकस्यैव पुस्तकस्यालम्बनेन यथामति संशो[illegible] कृतेऽप्यत्र निबन्धे या काचनाऽक्षिदोषादक्षरयो[illegible] कृता जाता वा भवेत् तां शोधयिष्यन्ति सदयहृदयाः [illegible] इत्याशास्ते—

विद्वज्जनकृपाभिलाषी

**नित्यानन्दशर्मा ।**

॥ अर्हम् ॥

तपागच्छाचार्यश्रीविजयसेनसूरिप्रणीता

# सूक्तरत्नावली ।

विबुधानन्दजननीं, गुरोर्वाचमुपास्महे ।
या रसेव रसै रम्या, मङ्गलोत्सवकारिणी ॥ १ ॥
वचोभिर्नीतिनिस्यन्दकन्दकादम्बिनीनिभैः ।
दध्मो व्याख्याजुषां शिक्षां, मुखाम्भोजरवित्विषम् ॥ २ ॥
[1]भावसारस्ययुक्तानि, सूक्तानि प्रतिकुर्महे ।
रविपादैरिवाम्भोजं, यैः सभोल्लासभाग् भवेत् ॥ ३ ॥
विनेन्दुनेव रजनी, वाणी श्रवणहारिणी ।
दृष्टान्तेन विना स्वान्ते, विस्मयं वितनोति न ॥ ४ ॥
दृश्यते सदसद्वस्तु, यैर्भास्करकरैरिव ।
दृष्टान्तास्तुष्टये सन्तु, काव्यालङ्कारकारिणः ॥ ५ ॥
अतश्चित्तचमत्कारमकराकरचन्द्रिकाम् ।
भावयुक्तेषु, सूक्तेषु, ब्रूमो दृष्टान्तपद्धतिम् ॥ ६ ॥

---

भवेत्तुङ्गात्मनां संपद्, विपद्यपि पटीयसी ।
पत्रपाते पलाशानां, किं न स्यात् कुसुमोद्गमः ? ॥ ७ ॥
गुणदोषकृते स्थानास्थाने तेजस्विता स्थिता ।
दर्पणे मुखवीक्षायै, खड्गे प्राणप्रणाशकृत् ॥ ८ ॥

---

१ सरसस्य भावः सारस्यं, भावश्च सारस्यं च ताभ्यां युक्तानि ॥

पदे पदेऽधिगम्यन्ते, पापभाजो न चेतरे ।
भूयांसो वायसाः सन्ति, स्तोका यच्चापपक्षिणः ॥ ९ ॥
अपि तेजस्विनं दौस्थ्ये, त्यजन्ति निजका अपि ।
न भानुर्भानुभिर्मुक्तः, किमस्तसमये सखे ! ॥ १० ॥
ज्योतिष्मानपि सच्छिद्रैः, सङ्गतोऽनर्थहेतवे ।
मञ्चकान्तरिता दीपप्रभा पुण्यप्रणाशिनी ॥ ११ ॥
मलिनोऽपि श्रियं याति, महस्विमिलनादलम् ।
सम्पर्कान्नाञ्जनं भाति, किं दृशां हरिणीदृशाम् ? ॥ १२ ॥
पराभूतोऽपि पुण्यात्मा, न स्वभावं विमुञ्चति ।
तोयमुष्णीकृतं कामं, शीततां पुनरेति यत् ॥ १३ ॥
महोत्सवे च जायन्ते, पापभाजामभूतयः ।
नापत्राः किं वसन्तेऽपि, करीरतरवोऽभवन् ? ॥ १४ ॥
नीचसङ्गेऽपि तेजस्वी, नैर्मल्यं भृशमश्नुते ।
किमभूद्भस्मलिप्तेऽपि, दर्पवृद्धिर्न दर्पणे ? ॥ १५ ॥
बिभर्ति भृशमुल्लासं, सद्वृत्तः पीडितोऽपि हि ।
किं नाऽभून्मार्दवं भूरिवह्नौ मुक्तेऽपि पर्पटे ? ॥ १६ ॥
सेव्यः स्यान्नार्थिसार्थानां, महानपि धनैर्विना ।
सेव्यते पुष्पपूर्णोऽपि, पलाशः षट्पदैर्न यत् ? ॥ १७ ॥
हन्त ! हन्ति तमोवृत्तिर्माहात्म्यं महतामपि ।
अभवत् प्रथमः पक्षः, श्यामः शशिनि सत्यपि ॥ १८ ॥
सतामपि बलात्काराः, सुकृते न च दुष्कृते ।
घृतं भुङ्क्ते बलादश्वस्तृणान्यत्ति स्वयं च यत् ॥ १९ ॥

१ मतान्तरेण मिलेरपि कुटादित्वाद् गुणाभावः । २ सुचरित्रः पक्षे सुवर्तुलः

वासरास्ते तु निःसाराः, ये यान्ति सुकृतं विना ।
विनाङ्कं बिन्दवः किं स्युः, संख्यासौभाग्यशालिनः? ॥२०॥
भवन्ति सङ्गताः सद्भिः, कर्कशा अप्यकर्कशाः ।
किं चन्द्रकान्तश्चन्द्रांशुसंश्लिष्टो न जलं जडः? ॥ २१ ॥
स्वोऽपि संजायते दौःस्थ्ये, पराभूतेर्निबन्धनम् ।
यत्प्रदीपप्रणाशाय, सहायोऽपि समीरणः ॥ २२ ॥
दोषोऽपि गुणसंपत्तिमश्नुते वस्तुसङ्गतः ।
संश्लिष्टमपि काठिन्यं, कुचयोरजनि श्रिये ॥ २३ ॥
दोषं विशेषतः स्थानाऽभावाद्याति गुणः स्वयं ! ।
न निन्द्या स्तनयोर्नेश्रे, नम्रताऽभिमतापि किम्? ॥ २४ ॥
गते तेजसि सौभाग्यहानिर्ज्योतिष्मतामपि ।
यन्निस्तेजाः शमीगर्भो, रक्षेयमिति कीर्त्यते ॥ २५ ॥
प्रायः पापेषु पापानां, प्रीतिपीनं भवेन्मनः ।
पिचुमन्दलतास्वेव, वायसानां रतिर्यतः ॥ २६ ॥
प्रायशस्तनुजन्मानोऽनुयान्ति पितरं प्रति ।
धूमाज्जाते हि जीमूते, कलितः कालिमा न किम्? ॥२७॥
नेशाः कर्तुं वयं वाचां, गोचरं गुणगौरवम् ।
यत् सच्छिद्रोऽपि मुक्तौघः, कण्ठे लुठति सद्मनात् ॥ २८ ॥
आत्मकृत्यकृते लोकैर्नीचोऽपि बहु मन्यते ।
धान्यानां रक्षणाद् रक्षा, यद्यत्नेन विधीयते ॥ २९ ॥
सतां यत्रापदः प्रायः, पापानां तत्र संपदः ।
मुद्रिताक्षेषु लोकेषु, यद् घूकानां दृशः सिताः ॥ ३० ॥

---

१ शमीगर्भः अग्निः । २ निम्बवृक्षेषु । ३ ईशाः समर्थाः । ४ भस्म ॥

मानितोऽप्यपकाराय, स्यादवश्यं दुराशयः ।
किं मूर्ध्नि स्नेहनाशाय, नारोपित(ः)खलः खलु ? ॥ ३१ ॥
नोपैति विकृतिं कामं, पराभूतोऽपि सज्जनः ।
यन्मर्दितोऽपि कर्पूरो, न दौर्गन्ध्यमुपेयिवान् ॥ ३२ ॥
विपत्तावपि माहात्म्यं, महतां भृशमेधते ।
सौरभं काकतुण्डस्य, किमु दाहेऽपि नाऽभवत् ? ॥ ३३ ॥
स्तोकोऽपि गुणिसंपर्कः, श्रेयसे भूयसे भवेत् ।
लवणेन किमल्पेन, स्वादु नान्नमजायत ? ॥ ३४ ॥
भवन्ति परसंपत्तौ, पुण्यात्मानः सदाशयाः ।
नभोनैर्मल्यमालोक्य, शरद्यम्भोऽभवच्छुभम् ॥ ३५ ॥
पापात्मसङ्गमेऽपि स्यात्, ख्यातिरेव महात्मनाम् ।
चित्रेषु न्यस्ता शोभायै, किं रेखाऽजनि नाञ्जनी ? ॥३६॥
अन्यदेशगतिर्न्याय्या, महोहानौ मन(ह)स्विनाम् ।
न किं द्वीपान्तरं प्राप्तस्त्विषां नाशे त्विषांपतिः ? ॥ ३७ ॥
लघीयानपि वाल्लभ्यं, समेति समये सखे ! ।
आदेया भोजनप्रान्ते, शलाका तृणमय्यपि ॥ ३८ ॥
खण्डीकृतोऽपि पापात्मा, पापान्नैव निवर्तते ।
शिरोहीनोऽपि किं राहुर्ग्रसते न सुधाकरम् ? ॥ ३९ ॥
बालं दृष्ट्वाऽपि दुष्टानां, दयोदेति हृदि ध्रुवम् ।
ग्रस्यते किं द्वितीयायाः, शत्रुणा राहुणा शशी ? ॥ ४० ॥
अभाग्ये सत्यनर्थाय, सतां सङ्गोऽपि जायते ।
नालिकेरजलं जज्ञे, कर्पूरमिलनाद्विषम् ॥ ४१ ॥

विरोधोऽपि भवेद्भूत्यै, कलावद्भिः समं सखे ! ।
दीयते काञ्चनं चन्द्रग्रासात्तमसि वीक्षिते ॥ ४२ ॥
कलावानपि जिह्मात्मा, बहुभिर्बहु मन्यते ।
किमु लोकैर्द्वितीयाया, नमश्चक्रे न चन्द्रमाः ? ॥ ४३ ॥
अश्व(स्व)कोऽपि गुणैर्गाढं, स्यात्सभाजनभाजनम् ।
आरोप्यते नृपैर्मूर्ध्नि, वनोत्पन्नोऽपि चन्दनः ॥ ४४ ॥
पापधीर्द्रुतमभ्येति, बहूपायैश्च धर्मधीः ।
वस्त्रे स्यात् कालिमा सद्यः, शोणिमा भूरिभिर्दिनैः ॥४५॥
संपत् पापात्मनां प्रायः, पापैरेवोपभुज्यते ।
भोज्यं बलिभुं[1]जामेव, फलं निम्बतरोरभूत् ॥ ४६ ॥
भोग्यं भाग्यवतामेव, संचितं तद्धनै[2]र्धनम् ।
परैरादीयते नूनं, मक्षिकामेलितं मधु ॥ ४७ ॥
का क्षतिर्यदि नासेवि, तुङ्गात्मा मलिनात्मभिः ? ।
का हानिर्हेमपुष्पस्य[3], मुक्तस्य मधुपैरभूत् ? ॥ ४८ ॥
नीचानां वचनं चारु, प्रस्तावे जल्पतां सताम् ।
प्रीतिकृत् प्रस्थितानां हि, वामं गर्दभगर्दितम् ॥ ४९ ॥
लघोरपि वचो मान्यं, समये स्याद् महात्मनाम् ।
प्रस्थितैर्वामदुर्गायाः, शब्दः श्रेयानुदीरितः ॥ ५० ॥
स्थानभ्रष्टोऽपि शिष्टात्मा, लभेन्मानमनर्गलम् ।
खानेश्च्युतो मणिर्भूमन्मूर्धानमधिरोहति ॥ ५१ ॥

---

१ काकानाम् । २ तद् धनं येषां ते तथाभूताः तैः, तत्तद्धनपतिभिरित्यर्थः । ३ स्वर्णचम्पकस्य । ४ भूमतां राज्ञां मूर्धा शिरः तम् ॥

मध्ये मेधाविनां मातृमुखानां[1] मानमर्हति ।
कोकिलान्तर्गताः काकाः, कोकिला एव यद्वशात् ॥ ५२ ॥
न मौनं वाग्मिनां शस्तं, वाक्कलाकुशलात्मनाम् ।
अकूजन् कोकिलो लोकैः, काकोऽयमिति गीयते ॥ ५३ ॥
अल्पीयानप्यसत्सङ्गः, स्यादनर्थाय भूयसे ।
यवनैरेकशो भुक्तः, स्यादाजन्मान्वयाद्बहिः ॥ ५४ ॥
विकारं नैति जीवान्तं, कष्टमारोपितोऽपि सन् ।
यत्तापितमपि स्वर्णं, वर्णं धत्ते मनोरमम् ॥ ५५ ॥
न करोति नरः पापमधीताऽल्पश्रुतोऽपि सन् ।
यद्भणन् रामरामेति, न कीरः पललालसः[2] ॥ ५६ ॥
वसन्नपि ....[3].... पापो, न वेत्ति गुणिनां गुणान् ।
न तिष्ठन्नुदके भेको, गन्धं वेत्ति सरोरुहाम् ॥ ५७ ॥
महद्भिर्मिलनान्मन्दा, अपि स्युर्दुःसहाः सखे ! ।
जलं ज्वलनसंपृक्तं, दुःसहं दृश्यते न कैः ? ॥ ५८ ॥
परतः संपदं प्राप्य, सोत्कर्षा नीचगामिनः ।
लब्धतोयाः पयोवाहाद्दुस्तराः सरितो न किम् ? ॥ ५९ ॥
न पदं संपदां प्रायः, कुलोत्पन्नोऽपि दुर्मनाः ।
अन्तर्वक्रोऽब्धिसूः शङ्खो, दृष्टो भिक्षाकृते भ्रमन् ॥ ६० ॥
भवेद्वस्तुविशेषेण, सुकृते दुष्कृते च धीः ।
ध्यानधीरक्षमालायां, प्रहारेच्छा च कार्मुके ॥ ६१ ॥

---

१ मूर्खाणाम् । २ मांसलोलुपः । ३ अत्राक्षरद्वयं त्रुटितम्; तच्च 'समं' इति भवेत् ॥

वपुःशेषोऽप्यपुण्यात्मा, स्वभावं न विमुञ्चति ।
जहाति जिह्मतां रज्जुर्ज्वलितापि न जातुचित् ॥ ६२ ॥
सतां नोपप्लवाय स्युर्द्विजिह्वा मिलिता अपि ।
नैषि सङ्गाद्भुजङ्गानां,....[1]....चन्दनद्रुमः ॥ ६३ ॥
निजकार्याय दुष्टोऽपि, महद्भिर्बहु मन्यते ।
दाहकार्येऽपि सप्तार्चिरिन्धनार्थं[2] गवेष्यते ॥ ६४ ॥
कुप्रसिद्धिः कुसङ्गेन, तत्क्षणान्महतामपि ।
महेशो विषसान्निध्यात्, कण्ठेकालोऽयमीरितः ॥ ६५ ॥
न सत्संस्तवसौभाग्यं, गदितुं गुरुरप्यलम् ।
तन्तुभिः सुमनैः[3]सङ्गाल्लब्धं स्वाहाभुजां शिरः ॥ ६६ ॥
निःसारे वस्तुनि प्रायो, भवेदाडम्बरो महान् ।
कुसुम्भे रक्तिमा यादृग्, घुसृणे न च तादृशी ॥ ६७ ॥
क्षीयतेऽभ्युदयेऽन्येषां, तेजस्तेजस्विनामपि ।
नोदये पद्मिनीबन्धोः, किं दीपाः क्षीणदीप्तयः ? ॥ ६८ ॥
पात्रे शुद्धात्मने वित्तं, दत्तं स्वल्पमपि श्रिये ।
दत्ते स्निग्धानि दुग्धानि, यद्गवां चारितं तृणम् ॥ ६९ ॥
स्वल्पसत्त्वेष्वपि स्वेषु, वृद्धिः सत्स्वेव निश्चितम् ।
उद्गमो यज्जनैर्दृष्टः, सतुषेष्वेव शालिषु ॥ ७० ॥
सिद्धिं सृजन्ति कार्याणां, स्मितास्या एव साक्षराः ।
लेखा उन्मुन्द्रिता एव, जायन्ते कार्यकारिणः ॥ ७१ ॥

---

१ अत्राक्षरत्रयं त्रुटितम्; तच्च 'भृङ्गैः किं' इति संगच्छेत । २ इन्धनार्थं काष्ठार्थं काष्ठप्रज्वालनार्थमित्यर्थः । 'रन्धनार्थं' इति पाठो लभ्येत चेत् पाचनार्थमिति सुगम एवार्थः स्यात् । ३ सुमनसां पुष्पाणां, सतामित्यपि ॥

उपकारः सतां स्थानविशेषाद्गुणदोषकृत् ।
लोके घूके रवेर्भासस्तेजसे चाऽप्यतेजसे ॥ ७२ ॥
भवन्ति महतां प्रायः, संपदो न विनापदम् ।
पत्रपातं विना किं स्याद्भूरुहां पल्लवोद्गमः ? ॥ ७३ ॥
महद्भ्यः खेदितेभ्योऽपि, प्रादुर्भवति सौहृदम् ।
प्रादुरासीन्न किं सर्पिर्मथितादपि गोरसात् ? ॥ ७४ ॥
नाशं कर्तुमलं वीरा, न तज्जातिं विना द्विषाम् ।
छिद्यन्ते पर्शुभिर्वृक्षा, न विना दारुहस्तकम् ॥ ७५ ॥
दत्ते ह्यनर्थमत्यर्थं, कुपात्रे निहितं धनम् ।
किं वृद्धये विषस्यासीन्नाऽहीनां पायितं पयः ? ॥ ७६ ॥
शिष्टे वस्तुनि दुष्टस्य, मतिः स्यात् पापगामिनी ।
कलावतीन्दौ मिलिते, राहुरत्तुमना[1] अभूत् ॥ ७७ ॥
भवन्त्यवसरे तुङ्गा, नीरसेऽपि रसोत्तमाः ।
यद् ग्रीष्मर्त्तौ सुभीष्मेऽपि, रसाला रसशालिनः ॥ ७८ ॥
तुच्छाहारेऽपि तुच्छानां, विषयेच्छा महीयसी ।
दृषत्कणभुजोऽपि स्युः, कपोताः कामिनो बहु ॥ ७९ ॥
धिग् नैःस्व्यं[2] यद्वशान्नाथं, त्यजन्त्यपि मृगीदृशः ।
ईशमाशाम्बरं हित्वा, जाह्नवी जलधिं ययौ ॥ ८० ॥
साधारणेऽपि सम्बन्धे, काऽपि स्यात् प्रेम मानसम् ।
रोहिण्या एव भर्त्तेन्दुर्न्यक्षऋक्षाऽधिपोऽपि[3] यत् ॥ ८१ ॥
मान्यन्ते गुणभाजोऽपि, न विना विभवं सखे ! ।
पतिताः पांशुभिः पूर्णे, पथि पर्युषिताः स्रजः ॥ ८२ ॥

१ असितुकामः । २ दारिद्र्यम् । ३ सर्वनक्षत्रपतिः ॥

रसिकेषु वसन् वेत्ति, कठोरात्मा न तद्रसम् ।
स्तनोपरि लुठन् हारस्तद्रसं नोपलब्धवान् ॥ ८३ ॥
ध्रुवं स्यादुपकाराय, मानितः सरलः सखे ! ।
प्राणानवति किं नैव, गृहीतं वदने तृणम् ? ॥ ८४ ॥
दुःखीकृत्याऽपि स्वं पापः, परेषामपकारकृत् ।
मृत्वाऽपि मक्षिकान्येषां, जायते वान्तिकारिणी ॥ ८५ ॥
दुःखीकृत्याप्यपापः स्वं, परेषामुपकारकृत् ।
झम्पां दत्वा स्वयं, वह्नौ, पर्पटः परपुष्टये ॥ ८६ ॥
न वासोऽपि श्रिये नीचगामिनां सन्निधौ सताम् ।
यत् पेतुः पादपाः कूलङ्कषाकूलभुवः स्वयम् ॥ ८७ ॥
नान्यस्मै स्वं गुणं दत्ते, रागवानपि कर्कशः ।
अकारि विद्रुमेणाऽन्यद्वस्तु किं रक्तिमाङ्कितः ? ॥ ८८ ॥
शस्यते सर्वशास्त्रेभ्यो, रूढिरेव बलीयसी ।
तदङ्कत्वे समानेऽपि, शशीन्दुर्न मृगीति यत् ॥ ८९ ॥
दृशा दुष्टदृशां दृष्टाः, प्रभावन्तोऽपि निष्प्रभाः ।
बभूवुर्भुजगैर्दृष्टाः, प्रदीपाः क्षीणदीप्तयः ॥ ९० ॥
पिहितैव श्रियं धत्ते, पद्धतिः पुण्यकर्मणाम् ।
दुकूलकलितावेव, कुचौ कान्तौ मृगीदृशाम् ॥ ९१ ॥
महतामपि लघुता, तस्थुषां मूर्खपर्षदि ।
मन्दधामगतस्यासीन्नीचत्वं दिविषद्गुरोः ॥ ९२ ॥
मध्ये मेधाविनां तिष्ठन्, मूर्खोऽपि मानमश्नुते ।
मन्दोऽप्युच्चैःपदं प्राप, कविकेलिगृहं गतः ॥ ९३ ॥

दुर्दैवेऽनर्थसार्थाय, सङ्गतिर्धीमतामपि।
गतः कविसभां[1] भासां[2], प्रणयी प्राप नीचताम्॥ ९४॥
न तद्दोपलवोऽपि स्यात्, खलान्तर्वसतां सताम्।
तिष्ठन् मूर्धनि सर्पाणां, मणिः किं विपदोषवान्?॥९५॥
संगतौ गुणभाजोऽपि, स्तब्धानां न गुणः सखे!।
न मुखश्यामता नष्टा, स्तनयोर्हारहारिणोः॥ ९६॥
............................................।
घनोपद्रववारीणि, तृणानि मिलितानि यत्॥ ९७॥
मध्ये रिक्ता हता एव, भवन्ति मधुरस्वराः।
मृदङ्गेषु यथाऽवस्थमर्थमेनं निभालय॥ ९८॥
अचेतनेन यत्कार्यं, जातुचिन्नेतरैश्च तत्।
आप्यते यत् कपर्देन, न तत् कीटककोटिभिः॥ ९९॥
प्राप्य किंचित् परान्नीचः, स्यात् परोपप्लवप्रदः।
लब्ध्वा रविरुचां लेशं, भृशं यद्दुस्सहं रजः॥ १००॥
रागिभिर्लभ्यते भूरिरभिभूतिश्च नेतरैः।
यत् कुसुम्भभरः पादैर्हन्यते न दृषद्गणः॥ १०१॥
पुण्यवान् पापवांश्चापि, ख्यातिमन्तावुभावपि।
गजारूढं खरारूढं, चाऽपि पश्यन्ति विस्मयात्॥ १०२॥
लघीयानपि तोषाय, तेजोभाजोऽपि जातुचित्।
किं दीप्तये दृशोरासीद्दीपधूमोऽपि नाञ्जनम्?॥ १०३॥
प्रथिता याति न ख्यातिः, सन्तु मा सन्तु वा गुणाः।
यन्नारी नष्टनेत्राऽपि, प्रोच्यते चारुलोचना॥ १०४॥

---

१ शुक्रस्थानं, कवीनां सभां च। २ भासां कान्तीनां प्रणयी पतिः सूर्य इत्यर्थः॥

लघीयस्त्वेन तेजस्वी, नावज्ञामात्रमर्हति ।
क्वान्धकारं भृतागारं, क्व दीपकलिका किल ? ॥ १०५ ॥
अरङ्गोऽपि विशुद्धात्मा, परेषां रञ्जयेन्मनः ।
नागवल्लीगतश्चूर्णः, श्वेतोऽपि मुखरङ्गकृत् ॥ १०६ ॥
रागी रागिणि नीरागो, नीरागे श्रियमश्नुते ।
ताम्बूलमास्ये रक्तौष्ठे, श्यामतारेऽम्बके[1]ऽञ्जनम् ॥ १०७ ॥
लभन्ते सुभटाः संपद्वरं व्यङ्गितविग्रहाः[2] ।
विद्धयोः कर्णयोरेव, यत्स्वर्णमपि(णि)कुण्डले ॥ १०८ ॥
गुणवद्गौरवं याति, दोषो ज्योतिष्मतां सखे ! ।
दृशां स्फारासु तारासु, श्यामिका शस्यते न कैः? ॥१०९॥
उत्तुङ्गेषु रुषं कुर्वन्, भवेत् स्वयमनर्थभाक् ।
शरभेण मृतिर्लेभे, कुपितेन घनोपरि[3] ॥ ११० ॥
क्वचित् पिधत्ते मन्दोऽपि, प्रभाभाजामपि प्रभाम् ।
न किं पिदधिरे धूमयोनिना भानुभानवः ? ॥ १११ ॥
सखे ! श्रयति सौभाग्यमशुद्धेष्वेव रागवान् ।
सीमन्तिनीनां सीमन्ते, सिन्दूरं शुशुभे न किम् ? ॥११२॥
गुणे गतेऽपि केषाञ्चिन्न यशो याति जातुचित् ।
न किं मुण्डितमुण्डाऽपि, वधूः सीमन्तिनी मता? ॥११३॥
तुङ्गेष्वतुष्टस्तुच्छात्मा, नानर्थं कर्तुमीश्वरः ।
करोति शशकः किञ्चिद्भूधरेषु विरोधवान् ? ॥ ११४ ॥
किं करोति पिता श्रीमान्, यद्यभाग्यभृतः सुतः ? ।
शङ्खो भिक्षामटन् दृष्टो, रत्नाकरभवोऽपि यत् ॥ ११५ ॥

१ अम्बके नेत्रे । २ विद्धशरीराः । ३ मेघेन ॥

प्रस्तावे पाप्मनां पापाः, प्रजायन्ते प्रकाशिनः ।
द्योतन्ते खलु खद्योताः, तमिस्रे सति सर्वतः ॥ ११६ ॥
हृद्यहृद्योऽपि सर्वत्र, मान्यो मधुरवाग् भवेत् ।
वर्येस्तूर्येषु शङ्खोऽन्तश्चक्रोऽपि शुभगीरिति ॥ ११७ ॥
गुणा गौरवमायान्ति, तद्विदां पुरतः सखे ! ।
काम्यन्ते कोविदैरेव, काव्यानां कठिनोक्तयः ॥ ११८ ॥
दूरतः परिगच्छन्ति, शुद्धात्मानस्तिरस्कृताः ।
पातिताः प्रतिकुर्वन्ति, नोद्गमं दशनाः खलु ॥ ११९ ॥
प्रत्यर्थिनो हि हन्यन्ते, विना स्थानं महस्विभिः ।
स्वयमर्चिषि दीपस्य, पतङ्गा न पतन्ति किम् ? ॥ १२० ।
भाविनोऽपि प्रयच्छन्ति, गुणा गौरवमङ्गिनाम् ।
गुणानां बीजमिति यत्, कर्पासो मूल्यमर्हति ॥ १२१ ॥
अप्युषितः समं मूर्खैर्वाग्मी नोज्झति वाग्मिताम् ।
काकपा[1]कान्तिकस्थोऽपि, कलकण्ठः कलध्वनिः ॥ १२२ ।
सेवा स्वार्थाय नीचानामुच्चैरौचित्यमञ्चति ।
वपुःपुष्टीकृते बाल्ये, द्वि[2]कसेवी न किं पिकः ? ॥ १२३ ।
न विमुञ्चति वृद्धोऽपि, पैशुन्यं पिशुनः खलु ।
अश्नात्येव पुरीषं यत्, प्र[3]वया अपि वायसः ॥ १२४ ॥
नाऽमानमानमाप्नोति, वसञ्श्वशुरवेश्मनि ।
इन्द्रायादात्सुधामब्धिर्जामात्रे वाऽच्युताय न ॥ १२५ ॥
सखे ! वित्तवतां प्रायो, दुर्मोचो नीचसंस्तवः ।
पद्मं मधुप[4]संपर्कं, श्रीवेश्माऽपि जहौ न यत् ॥ १२६ ॥

---

१ पाकः शिशुः । २ द्विकः काकः । ३ वृद्धः । ४ मधुपाः भ्रमराः, मद्यपाश्च

विस्तारं व्रजति स्नेहः, स्वल्पोऽपि स्वच्छचेतसि ।
व्यानशे तैललेशोऽपि, सरः सर्वमपि क्षणात् ॥ १२७ ॥
निर्मलानां सुवृत्तानां, सङ्गः प्रोच्चैःपदप्रदः ।
मौक्तिकैर्मिलिताः स्त्रीणां, हृदि तिष्ठन्ति तन्तवः ॥१२८॥
तदेव दत्ते दाताऽपि, यद्भाले लिखितं भवेत् ।
त्रिपत्र्येव पलाशेऽभूद्वर्षत्यपि पयोधरे ॥ १२९ ॥
हित्वा बलं कुलं शीलं, पक्ष्मलक्ष्मीमुपास्महे ।
फलं तरुस्थं सत्पक्षः, काकोऽत्ति न च केशरी ॥ १३० ॥
वित्तं विनोपद्रवाय, स्वमित्रमपि जायते ।
नीरं विना विनाशाय, न किं सूरः[1] सरोरुहाम् ? ॥१३१॥
सहाये सति सोत्कर्षा, शक्तिस्तेजस्विनामपि ।
यदग्नेर्दीप्यते दीप्तिर्जवने[2] पवने सति ? ॥ १३२ ॥
यत्रास्ते ननु तेजस्वी, स्थानं तदपि मान्यते ।
अरणौ काष्ठमात्रेऽपि, लोकानां किमु नादरः ? ॥ १३३ ॥
तुच्छात्मोज्झति दृढतां, सद्यः सङ्गे प्रभाभृताम् ।
लाक्षा साक्षाज्जलं जज्ञे, संपर्केण हविर्भुजः[3] ? ॥ १३४ ॥
निःशक्तयोऽपि संयुक्ता, भवन्ति बलहेतवः ।
गुडकाष्ठपयोयोगे, मद्यशक्तिर्महीयसी ? ॥ १३५ ॥
किं करोति कठोरोऽपि, सङ्गते महसां निधौ ? ।
गाहयामास लोहोऽपि, द्रवतां मिलितेऽनले ॥ १३६ ॥
तेजस्तिष्ठतु सङ्गोऽपि, तद्वतां बीजमर्चिपाम् ।
पश्य पावकसंयोगाज्जलमप्यतिदाहकृत् ॥ १३७ ॥

---

१ सूरः सूर्यः । २ वेगवति । ३ अग्नेः ॥

गता यत्राऽपि तत्रापि, वाग्मिनो विश्ववल्लभाः ।
पुरग्रामवनोद्याने, कोकिलाः श्रुतिशर्मदाः ॥ १३८ ॥
सति स्वामिनि दासानां, तेजो भवति नाधिकम् ।
निर्भानि[1] भानि जायन्तेऽभ्युदिते रजनीकरे ॥ १३९ ॥
दैवमेव प्रपन्नानां, पुंसामाशा फलेग्रहिः ।
अपिबद्भिर्भुवस्तोयं, चातकैस्तुतुपेऽम्बुदात् ॥ १४० ॥
लभ्यते लघुता सद्भिः, परपार्श्वमुपस्थितैः ।
सनक्षत्रा ग्रहाः सर्वेऽस्तं गताः सूर्यपार्श्वगाः ॥ १४१ ॥
पदं पराभवानां स्यात्, पुमांस्तेजोभिरुज्झितः ।
पदप्रहारैर्न घ्नन्ति, किं निर्वाणं हुताशनम् ? ॥ १४२ ॥
दोषे तुल्याऽवकाशेऽपि, गुणी मान्यो न चेतरः ।
छिद्रे सत्यपि हारोऽस्थात्, कुचयोर्न च नूपुरम् ॥ १४३ ॥
तुच्छात्माऽपि पराभूतः, सद्यः स्यादभिभूतये ।
फूत्कृतेन हतं भस्म, स्वमयं कुरुते मुखम् ॥ १४४ ॥
स्वं विनाश्याऽपि तुच्छात्मा, भवेदन्यविनाशकृत् ।
पावके पतितं पाथः, स्वस्य तस्य च हानये ॥ १४५ ॥
हीनानां वृद्धिरल्पाऽपि, नार्हा तेजोजुषामपि ।
भस्मान्तं भारितो वह्निरसन्निव निरूप्यते ॥ १४६ ॥
विशेषाज्जडसंसर्गः, साक्षराणामनर्थकृत् ।
समर्थयन्त्यर्थमेनं, यल्लेखा लिखिताऽक्षराः ॥ १४७ ॥
नाप्नुवन्त्यबुधास्तत्त्वं, विद्वत्सु मिलितेष्वपि ।
किमन्धा मुखमीक्षन्ते, कृतेऽपि मुकुरे[2] करे ? ॥ १४८ ॥

---

१ कान्तिरहितानि (भानि-नक्षत्राणि)। २ दर्पणे ॥

परात् प्राप्तप्रतापानां, बलाधिक्यं कियच्चिरम् ।
दिवैवोष्णत्वमुष्णांशुतप्तानां रजसामभूत् ॥ १४९ ॥
महान्तो मिलिताः सन्तो, यच्छन्त्याधिक्यमात्मनः ।
शुक्ति(ः) संयुक्तितो मुक्ताफलत्वं जलमापयत् ॥ १५० ॥
स्वच्छात्मनि सङ्गतेऽपि, श्यामात्मा यात्यनिर्वृतिम् ।
कर्पूरेऽन्तर्निहितेऽपि, दृगश्रूणि विमुञ्चति ॥ १५१ ॥
नैवास्थानस्थितं वस्तु, वस्तुतः श्रियमश्नुते ।
महर्घ्यमपि काश्मीरं, रोचते न विलोचने ॥ १५२ ॥
शुद्धात्मा दुःखदाताऽपि, भवेदायतिशर्मदः ।
बाष्पपातेऽपि कर्पूराच्छैत्यं तदनु चक्षुषोः ॥ १५३ ॥
दुर्मुखानां गुणप्राप्तिर्दुःखाय जगतामपि ।
छिद्राऽन्वेषी परप्राणान्, हन्ति बाणो हि तादृशः ॥१५४॥
अन्तःशिष्टा अपि मुखे, दुष्टा अप्रीतिकारिणः ।
दुष्टाः किं नाऽहयस्तुण्डे, सविषे निर्विषा हृदि ? ॥ १५५॥
दोषः स्तोकोऽपि नीचानां, जगदुद्वेगकारणम् ।
वृश्चिकानां विषं दुष्टमपि पुच्छाऽग्रगं विषम् ॥ १५६ ॥
सदुक्तिरपि दोषाय, कदाग्रहजुषां सखे ! ।
संनिपातवतां सर्पिष्पानं तद्वृद्धये न किम् ? ॥ १५७ ॥
भवन्ति सुमनःसङ्गादपि क्षुद्रास्तदन्तिनः ।
यत्तिला मिलिताः पुष्पैर्बभूवुस्तन्मया इव ॥ १५८ ॥
वाचोऽपि जडतः प्रादुर्भूताः सन्तापहेतवे ।
जाता जीमूततो विद्युन्न स्यात् किं दाहदायिनी ? ॥१५९॥

---

१ सर्पिर्घृतम् ॥

क्षुद्रात्मानोऽन्तरागत्य, सृजन्ति[1] महतां क्षितिम्[2]।
मशकाः करिकर्णान्तः, प्रविश्य घ्नन्ति तं न किम्?॥१६०॥
स्यादपि स्वल्पसत्त्वानां, भूयसी भीर्महात्मनाम्।
मशका यान्तु मा श्रुत्योर्भियेतीभश्चलश्रवाः॥ १६१ ॥
महान् सद्यः समुत्पन्नोऽप्युपकाराय भूयसे।
व्यजनोद्भूतोऽपि वातः, शैत्यं धत्ते न किं द्रुतम्?॥१६२॥
महस्विनोऽप्यवश्यं स्यात्, तुच्छात्माऽनर्थकारणम्।
तृणलेशेऽन्तःपतिते, वाष्पपातो न किं दृशोः?॥ १६३ ॥
महात्मनां विपत्तौ स्यादुत्साहः श्यामलात्मनाम्।
किमस्तसमये भानोर्न च्छाया वृद्धिभागभूत्?॥ १६४ ॥
श्यामात्मानः समायान्ति, न्यक्कृता[3] अपि सत्वरम्।
झटित्येव यदुद्यान्ति, मुण्डिता अपि मूर्धजाः॥ १६५ ॥
महानास्तां तदभ्यर्णभाजोऽपि दृग्गरीयसी।
कुञ्जराः कीटिकाकल्पाः, शैलमूर्धनि तस्थुपाम्॥ १६६ ॥
लघोस्तेजस्विताऽपि स्यान्महतोऽपि लघुत्वकृत्।
संक्रान्तो मुकुरक्रोडे[4], भूधरः कर्करायते॥ १६७ ॥
लघीयसां गतिर्यत्र, न तत्र महतां गतिः।
पिपीलिकानामारोहो, यद्गजानामगोचरः॥ १६८ ॥
संग्रहः श्रियमिच्छद्भिः, कर्त्तव्योऽपि लघीयसाम्।
संगृहीतं दृशोराशीत्, कज्जलं किं न कान्तये?॥ १६९ ॥
सत्कृतोऽपि त्यजत्येव, न खलः खलतां खलु।
कटुतां नाऽत्यजन्निम्बः, पायितःससितं[5] पयः॥ १७० ॥

१ कुर्वन्ति। २ हानिम्। ३ तिरस्कृताः। ४ दर्पणमध्ये। ५ शर्करासहितम्॥

वंशेषु[1] विनयिष्वेवाऽधिरोहन्ति गुणाः सखे ! ।
नतिमत्येव कोदण्डे, दृष्टं यद्गुण[2]गौरवम् ॥ १७१ ॥
वासस्थानविनाशाय, भवन्ति सुकृतीतराः ।
काष्ठकीटा न किं दृष्टा, ईदृग्दुष्टविचेष्टिताः ? ॥ १७२ ॥
पतितस्य निजस्याऽपि, न सङ्गो गुणिनां मतः ।
यत्संस्तुता[3]वपि त्यक्तौ, हारेण युवतीकुचौ ॥ १७३ ॥
एकेन बहुदोषोऽपि, गुणेन बलिना प्रियः ।
हारः सच्छिद्रमुक्ताढ्यो, मान्यो नैकगुणोऽपि किम् ? ॥ १७४ ॥
लघूनपि गुरूकुर्युः, स्वमहोभिर्महस्विनः ।
पश्य दीपप्रभादीप्तं, लघु रूपं महत्तरम् ॥ १७५ ॥
सेवा तिष्ठतु शिष्टानामपि दर्शनमर्थकृत् ।
न स्यात् संपत्तये केषां, प्रेक्षणं चाषपक्षिणाम् ? ॥ १७६ ॥
अचेतनोऽप्यपुण्यात्मा, सेवितोऽनर्थसार्थकृत् ।
न च्छायाऽप्युपविष्टानां, किं कले[4]ः कलिकारिणी ॥ १७७ ॥
यत्र तत्र समेतः स्यादपुण्यः पदमापदाम् ।
प्राप्तो वहति पानीयं, यत्र तत्राऽपि कासरः ॥ १७८ ॥
अचेतनोऽपि धन्यात्मा, सेवितः संपदे सखे ! ।
चिन्तामणिः किमश्माऽपि, न सूते श्रियमीप्सिताम् ? ॥ १७९ ॥
अयच्छन्तोऽपि संपत्तिं, प्रीतये विपुलाशयाः ।
अददानोऽपि विद्युत्वान्न मुदे किं कलापिनाम् ? ॥ १८० ॥

---

१ वंशेषु कुलीनेषु, वेणुजातेषु च । २ अत्र गुणशब्देन ज्या । ३ परिचितौ । ४ विभीतक(बहड़ा)वृक्षस्य । ५ महिषः ॥

वित्तवत्स्वेव जायेत, नृणां प्रीतिर्महत्स्वपि ।
हर्षः सप्रतिमेष्वेव, चैत्येष्वप्रतिमेष्वपि ॥ १८१ ॥
सदसतोरीक्षितयोः[1], सौहृदं सति संभवेत् ।
घृते भवति वाल्लभ्यं, जग्धयोर्घृततैलयोः ॥ १८२ ॥
सृजन्ति विशदात्मानो, विवेकं वस्त्ववस्तुनोः ।
मराला एव कुर्वन्ति, निर्णयं क्षीरनीरयोः ॥ १८३ ॥
आपत्प्राप्तोऽपि तेजस्वी, परस्मा उपकारकृत् ।
किमस्तं व्रजता न्यस्तं, न दीपेंऽशुमता महः ॥ १८४ ॥
सुखयन्ति जगद् वाग्भिर्लवीयांसोऽपि वाग्मिनः ।
किं न लघ्व्योऽपि गोस्तन्यो[2], रसैर्विश्वसुखावहाः ? ॥१८५॥
महानपि प्रसिद्धोऽपि, दोषः क्वाऽपि गुणायते ।
न जरा भाति किं दीक्षाभाजि भिषजि राजि च? ॥१८६॥
आस्तां प्रभावांस्तत्प्राप्तप्रभोऽपि जनकृत्यकृत् ।
सूर्यादाप्तरुचोऽप्यासन्, यद्दीपाः कार्यकारिणः ॥ १८७ ॥
धत्ते महस्वितां मूर्खैर्मलिनोऽपि महाधनः ।
भ्रमवच्छाणसंसर्गी, किमसिर्न विभासुरः ? ॥ १८८ ॥
धत्ते शोभां विशेषेण, जडोऽप्यत्युग्रसङ्गतः ।
मिलितं किं श्रियं याति, पानीयं नासिधारया ? ॥१८९॥
एको दुर्जनदृग्वारी, दोषो विदुषि जायते ।
रेखा स्याद्बालभालस्थाऽञ्जनी दृग्दोषवारिणी ॥ १९० ॥
पापः सतां सभान्तःस्थो, रक्षिता तद्गुणश्रियाम् ।
न किमन्तर्गतोऽङ्गारः, पाति कर्पूरसंपदम् ? ॥ १९१ ॥

---

१ शोभनाऽशोभनयोः । २ द्राक्षाः ॥

तुङ्गानामापदं हर्तुं, तुङ्गा एव भवन्त्यलम् ।
समर्थास्तोयदा एव, तापं हर्तुं महीभृताम् ॥ १९२ ॥
कलावन्तो विशिष्यन्ते, पुरतोऽपि प्रभाभृताम् ।
सति सूरे शशी तस्मिन्, सति नान्यश्च दृश्यते ॥ १९३ ॥
एकाऽन्वयभुवोऽपि स्युः, शुद्धाः पूज्या न चेतरे ।
गोजातमपि मान्यं यद्गोरसं न च गोमयम् ॥ १९४ ॥
रसिकैरेव बुद्ध्यन्ते, रसिकानां गिरः सखे ।
ध्रियन्ते वसुमत्यैव, यत्पयांसि पयोमुचाम् ॥ १९५ ॥
तुल्येऽपि विपयोल्लेख, आकृतिस्तु बलीयसी ।
पुंसामेवाग्रहः स्त्रीषु, न तासां तेषु चाभवत् ॥ १९६ ॥
समानेऽपि हि संबन्धे, निजार्थो बलवत्तरः ।
पत्न्याः पुत्रे महिष्याश्च, पुत्र्यां यत् प्रेम मानसम् ॥१९७॥
मानोन्नता न मुञ्चन्ति, स्वं मानं प्रहृता अपि ।
नतौ नलिननेत्राया, न स्तनौ निहतावपि ॥ १९८ ॥
कर्णे कर्णेजपैर्युक्तः, कोविदोऽपि विकारवान् ।
यद्गिरीशोऽप्यभूद्भीमो, द्विजिह्वाधिष्ठितश्रवाः ॥ १९९ ॥
विनेयास्ताडिता एव, संपद्यन्ते पदं श्रियाम् ।
सुवर्णमपि जायेत, हतमेव विभूषणम् ॥ २०० ॥
दोषे दोषैकदृग्-दृष्टिर्न गुणे प्रगुणे पुनः ।
खराणां[1] पतनेच्छा स्यात्, पांसौ न च जलेऽमले ॥ २०१ ॥
संप्राप्तसंपदोऽपि स्युर्न सन्तः शीललोपिनः ।
किं कलाकलितोऽपीन्दुर्जहौ जिष्णुपदस्थितिम्[2] ? ॥२०२ ॥

---

१ गर्दभानाम् । २ जिष्णोः विष्णोः पदं, आकाशम्, विष्णुचरणाश्रयं च ॥

तुल्येऽपि कर्मणि स्थानविशेषान्तरि गौरवम् ।
समाने भारनिर्वाहे, यद्वामे गुरुता गवि ॥ २०३ ॥
महतामपि दुर्मोचा, दुष्टतान्तर्विवर्त्तिनी ।
किमाम्रैरमृतात्कैम्रैर्मुमुचेऽन्तःकठोरता? ॥ २०४ ॥
स्थानके भूयसीं शोभामपि सद्वस्तु गच्छति ।
स्त्रीदृशोरञ्जनस्य श्रीर्या न सा नरचक्षुषोः ॥ २०५ ॥
स्थाने यच्छोभनं वस्तु, कुस्थाने स्यात्तदन्यथा ।
वालाः पुंसां मुखे ग्रस्तास्तुण्डे स्त्रीणामनर्थदाः ॥ २०६ ॥
श्रेयानपि स्थितः पापैर्गुणोऽन्येषां भयावहः ।
ऊर्णनाभे कुविन्दत्वं, मक्षिकाणामनर्थकृत् ॥ २०७ ॥
नाऽतिशुद्धस्वरूपाणां, दुरिते जायते रतिः ॥
स्थीयते कलहंसैः किं, वर्षासु कलुषाम्भसि ? ॥ २०८ ॥
खलानां न स्तुतिस्तादृक्, प्रिया निन्दा च यादृशी ।
........................................ ॥ २०९[3]॥
वहिस्तान्मञ्जवस्तुच्छा, अन्तः कठिनवृत्तयः ।
किमीदृक् क्वाऽपि केनाऽपि, नालोकि वदरीफलम्? ॥२१०॥
सृजन्ति तुच्छा अप्यार्त्तिं, महतां महतोऽत्यये ।
तिष्ठन्ति तरणेरस्ते, मुद्रितास्याः खगा अपि ॥ २११ ॥
प्रभावान्निष्प्रभेणाऽपि, सङ्गतः श्रियमश्नुते ।
रविरुच्चैः पदं प्राप, गतोऽप्यङ्गारकौकसि ॥ २१२ ॥
कलावानपि हीनत्वं, कलयेद्वक्रवेश्मगः ।
न नीचो वृश्चिकस्थः किं, बान्धवः कुमुदामभूत् ? ॥२१३॥

१ मनोहरैः । २ तन्तुवायत्वम् । ३ एतस्योत्तरार्द्धं त्रुटितम् ॥

दोपायते गुणः क्वाऽपि, दोपः क्वाऽपि गुणायते ।
केशेषु शुभ्रिमा दुष्टः, शिष्टस्तारासु कालिमा ॥ २१४ ॥
तुङ्गाः कार्यविशेपाय, मान्यन्ते तद्गुणप्रियैः ।
पोष्यन्ते दन्तिनो नूनं, दुर्गध्वंसाय पार्थिवैः ॥ २१५ ॥
तुच्छोऽपि हृद्यवादित्वाज्जायते मानभाजनम् ।
किं कीरः कामितां शुक्तिं, नाप्नोति मधुरं ब्रुवन्? ॥२१६॥
नीचा अपि पीडितायां, स्वजातौ यान्त्यनिर्वृतिम् ।
पूत्कुर्वन्ति न किं काकाः, काके मृतिमुपेयुषि? ॥ २१७ ॥
स्वजातिमेव निघ्नन्ति, नूनं जडैनिवासिनः ।
आकर्णिताः सकर्णैः किं, न मीनाः स्वकुलाशिनः?॥२१८॥
निवसन्तीं वयं विद्मः, सवित्रीनेत्रयोः सुधाम् ।
दुग्धपानं विना कूर्म्याः, प्राणन्त्यर्भा निभालनैः ॥ २१९ ॥
आढ्यस्तिष्ठतु तत्पार्श्वमपि तेजस्वि तेजसा ।
श्रीदर्दिग्वर्तिमूर्त्तिः किं, भानुमान्नातिदुःसहः? ॥ २२० ॥
रसाढ्या मध्ये मृदवः, स्युर्बहिः कर्कशा अपि ।
किमीदृक् क्वाऽपि केनाऽपि, नालोकि कदलीफलम्?॥२२१॥
ददतो नात्मनो वित्तव्ययं ध्यायन्ति दानिनः ।
स्वनाशो रम्भयाऽचिन्ति, किं फलोत्सर्जनक्षणे? ॥ २२२ ॥
अचेतनोऽपि तुङ्गात्मा, श्रितो दत्ते निजं गुणम् ।
अधस्तात्तस्थुषां शोकनाशायाशोकभूरुहः ॥ २२३ ॥

---

१ जडैः मूर्खैः सह निवसन्ति तयोक्ता मूर्खसहचराः, जलचराश्च डलयोरैक्यात् । २ पण्डितैः । ३ मातृचक्षुषोः । ४ श्रीदः कुबेरः तस्य दिक् उत्तरा तस्यां वर्तते मूर्तिर्यस्य सः उत्तरायणगत इत्यर्थः ॥

लभन्ते वाग्मिनो मानं, दुर्दशायां स्थिता अपि ।
कीरः पञ्जरसंस्थोऽपि, हारिगीरिति पाठ्यते ॥ २२४ ॥
आस्तां वाक् प्रीतये प्रोच्चैर्निःख्यातोऽपि कलानिधिः ।
किमीक्षितो मुदं दत्ते, न चकोरदृशां शशी ? ॥ २२५ ॥
अयुक्तमपि युक्तं तद्यच्चिरन्तनवाङ्मये ।
नदी व्योमनि तत्रापि, सरोजिनीति संमतम् ॥ २२६ ॥
द्विजिह्वाधिष्ठितः स्वामी, न क्लेशाय कलावताम् ।
कर्णाभ्यर्णस्थदृक्कर्णः, किमीशः शशिनो भिये ? ॥ २२७ ॥
असंभाव्यमपि प्रोक्तं, पूर्वैः स्यादतिसूनृतम् ।
पार्वती प्रस्तरापत्यं, सत्यमित्यवमीयते ॥ २२८ ॥
गुणाः सौन्दर्यशौर्याद्याः, साक्षरत्वं विना वृथा ।
सौवर्णं स्यादपि स्वर्णं, किं विनाक्षरसञ्चयम् ? ॥ २२९ ॥
महतां जननस्थानमुक्तिरुन्नतये भवेत् ।
विन्ध्यत्यजां गजानां किं, नाराित्रकं नृपाजिरे ? ॥ २३० ॥
सर्वतः स्याद्विनष्टोऽपि, गरीयान् गौरवास्पदम् ।
यदश्मा ज्वलितस्तूर्णं, चूर्णोऽभूद्भूपवल्लभः ॥ २३१ ॥
दोषस्तिष्ठतु तद्राजामभ्यर्णमपि दुःखकृत् ।
छिद्रयुक्तघटीपार्श्वे, झल्लरी यन्निहन्यते ॥ २३२ ॥
गुणिनामपि संसर्गो, दुर्मुखाणां गुणाय न ।
शरे शरासनासक्ते, दृष्टा काऽपि दयालुता ? ॥ २३३ ॥
यशःशेषोऽपि तेजस्वी, भवेदर्थाय भूयसे ।
न रूप्यस्वर्णयोः सिद्धिं, सूतः मृते मृतोऽपि किम् ? ॥ २३४ ॥

१ दृक्कर्णः सर्पः । २ सूतः पारदः ॥

प्रदत्तेऽनर्थमत्यर्थं, दुर्मुखैः पक्षशालिता ।
पक्षवानेव यत् पत्री[1], परप्राणाऽपहारकृत् ॥ २३५ ॥
तुङ्गवंशभवा नार्यः, पतिं दौःस्थ्ये त्यजन्ति न ।
मुमुचे हिमवत्पुत्र्या, नग्नोऽपि किमनङ्गजित् ? ॥ २३६ ॥
महात्मानो विरोधाय, सङ्गभाजो जडात्मभिः ।
चन्द्रयुक्ता ग्रहाः सर्वे, विवाहेऽनर्थहेतवः ॥ २३७ ॥
यत्रणं युक्तिमज्ञाने, स्तब्धानां चासितात्मनाम् ।
यत्सरोजदृशां बन्धः, कुचेषु चिकुरेषु च ॥ २३८ ॥
मूर्खाणामधिकत्वं स्यादुत्तमेषु प्रमादिषु ।
जगज्जातजडं[2] जज्ञे, यत्सुप्ते पुरुषोत्तमे ॥ २३९ ॥
बुद्धिमानपि निर्बुद्धेः, सङ्गतः स्याज्जगद्रिये ।
वर्यकार्यनिषेधी यद्गुरुः केशरिणं[3] गतः ॥ २४० ॥
धिग् दुष्टान् यान्ति स(य)त्सङ्गान्महात्मानस्तदात्मताम् ।
प्रययौ पापतां पापग्रहसङ्गेन यद्बुधः ॥ २४१ ॥
गुणः स्वल्पोऽपि संपत्त्यै, सखे ! दोषजुषामपि ।
सर्वाङ्गैर्भग्नभद्राया, भद्रायाः पुच्छमृद्धिकृत् ॥ २४२ ॥
दौःस्थ्यं दोषास्पदं शश्वत्, स्यात् कलाशालिनामपि ।
[4]....कान्तोऽप्यभवत्पापः, शशाङ्कः क्षीणवैभवः ॥२४३॥
कृत्यं भवति नीचानां, यच्च नीचैर्न चेतरैः ।
कारूणामर्थसिद्धिर्या, खरैः सा च न सिन्धुरैः ॥ २४४ ॥

---

१ बाणः । २ जलव्याप्तम् (वर्षाहेतोः), संजातमूढं च । ३ सिंहराशिम् ।
४ सप्ताक्षरेऽत्र पादे प्रथममेकमक्षरं त्रुटितं स्यात्; तच्च 'यत्' इति स्यात् ॥

तुच्छानां वक्रता तुङ्गैर्निराकर्त्तुं न शक्यते ।
केशेषु पतितो ग्रन्थिः, कुञ्जरैः किं निरस्यते ? ॥ २४५ ॥
कदाचिन्नातिनीचानां, संस्कारोऽपि गुणावहः ।
क्षालनं कम्बलानां स्याद्यद्विनाशाय सत्वरम् ॥ २४६ ॥
न सत्सङ्गगुणारोपः, शुद्धेऽप्यधमवंशजे ।
किं विम्बावस्थितिः क्वापि, भवेत् स्वच्छेऽपि कम्बले?॥२४७॥
शुद्धात्मानो विधीयन्ते, नाऽधमैः स्वसमाः समे ।
कम्बौ किमितरैर्वर्णैर्निधीयन्ते निजा गुणाः? ॥ २४८ ॥
जडात्मसु स्थिता व्यर्थं, महत्यपि महस्विता ।
व्यनक्ति स्वपरव्यक्तिं, नेन्दोर्भा भासुराऽपि यत् ॥२४९
जातौ सदृशि सर्वत्र, गोत्रमत्रोन्नतिप्रदम् ।
पशुत्वे सति सिंहस्योपमा रम्या शुनश्च न ॥ २५० ॥
भवेन्मान्यः कठोरोऽपि, मध्ये मधुरिमाङ्कितः ।
नालिकेरफले चक्रुर्नादरं कर्कशेऽपि के ? ॥ २५१ ॥
सिद्धे कार्ये जनैरुच्चैर्महानपि तृणायते ।
वध्यते मुकुटः स्तम्भे, विवाहानन्तरं न किम् ? ॥ २५२ ॥
गुणस्तुल्यास्पदेऽपि स्यान्निर्मले न ह्यनिर्मले ।
यत्सर्पिः प्राप्यते लोकैर्गोरसे न च गोमये ॥ २५३ ॥
दृश्यन्ते बहवः स्वल्पसत्त्वा नो सत्त्वशालिनः ।
पदे पदे पर्यटन्ति, भषणा न मृगद्विपः ॥ २५४ ॥
संपदप्यल्पसत्त्वानां, स्यादवश्यमनर्थकृत् ।
कस्तूरी ननु कस्तूरी-मृगाणां मृत्युकारिणी ॥ २५५ ॥

---

१ सर्वे ॥

इह हेतुरनर्थानामप्रस्तावे गुणज्ञता ।
गीतेषु रसिकैर्व्याधाद्यापि मरणं मृगैः ॥ २५६ ॥
महिमा मूलतो याति, कुस्थानस्थितवस्तुनः ।
कस्तूरीतिलकं पङ्कमेव पामरमूर्द्धनि ॥ २५७ ॥
निर्गुणा गुणिभिः सार्कं, संगता यान्ति गौरवम् ।
न धान्यैर्मिलिता लोकैर्गृह्यन्ते किमु कर्कराः ? ॥ २५८ ॥
तेजस्वी ननु तेजस्विसङ्गे राजति नाऽन्यथा ।
यथा भाति मणिः स्वर्णे, न तथा त्रपुणि स्थितः ॥२५९॥
व्रजन्नपि जडः स्थानविनाशाय ध्रुवं भवेत् ।
नेत्रयोर्निपतन्नीरं, हानये किं न तत्त्विषाम् ? ॥ २६० ॥
अपि तुङ्गात्मनां संपद्, बहिर्भूताऽभिभूतये ।
रदार्थमेव द्विरदा, निहन्यन्ते वनेचरैः ॥ २६१ ॥
वाग्मिनः किं प्रकुर्वन्ति, मिलिते मलिनात्मनि ? ।
श्यामले कम्बले वर्णैरितरैः का प्रतिक्रिया ? ॥ २६२ ॥
जन्मस्नेहः सतां स्वीयैर्हन्यते दुर्मुखैः क्षणात् ।
तन्दुलानां तुषैर्मैत्री, निरस्ता मुशलेन यत् ॥ २६३ ॥
मन्दा भवन्ति सालस्याः, कलावन्तस्तु सोद्यमाः ।
त्रिंशन्मासान् शनिरास्ते, राशौ चेन्दुर्दिनद्वयम् ॥ २६४ ॥
कोमलानां कठोरान्तःपतितानाममङ्गलम् ।
धान्यानां यद्घरट्टान्तर्गतानां कियती स्थितिः ? ॥ २६५ ॥
सन्तः स्युः सङ्गता सन्तः, श्रिये श्यामात्मनामपि ।
किं केशाः कलयामासुर्न शोभां संश्रिताः सुमैः ? ॥२६६॥

---

१ 'राँग' इति प्रसिद्धे धातुभेदे । २ पुष्पैः ॥

प्रायो न हित एव स्यात्, कठोरात्मा रसप्रदः ।
यद्भग्नमेव दत्ते द्राग्, नालिकेरफलं जलम् ॥ २६७ ॥
तादृग् भोक्तरि नोत्कर्षो, यादृग् भोग्ये प्रवर्त्तते ।
न वेषाडम्बरस्तादृक्, पुंसां यादृग् मृगीदृशाम् ॥ २६८ ॥
यद्येषां निकटं प्रायस्तत्तेषां वल्लभं भवेत् ।
स्तनान्तःस्थितपयसां, स्त्रीणामेव पयः प्रियम् ॥ २६९ ॥
न स्यात्तेजस्विनः शक्तिस्तादृग् यादृक् कलावतः ।
तादृग् नांशोर्बले शुद्धं, दिनं यादृग् निशापतेः ॥ २७० ॥
महिमानमक्षराणां, न वयं वक्तुमीश्महे ।
यत् कलिर्गालिदाने स्यादाशीर्वादे च सौहृदम् ॥ २७१ ॥
का भवेदुन्नतिः पुंसां, स्वगुणस्तवने स्वयम् ? ।
रसस्य संभवः क्वापि, किं निजाधरचर्वणे ? ॥ २७२ ॥
क्रियन्ते स्वमयाः सद्भिर्मृदवश्च न हीतरे ।
धीयते स्वगुणः पुष्पैस्तिलेषु नो पलेषु च ॥ २७३ ॥
तुच्छत्वेऽपि मृदुत्वं स्यात्, परर्द्धिग्रहणक्षमम् ।
पुष्पगन्धस्तिलैरेवादीयते न दृषत्कणैः ॥ २७४ ॥
लघीयानपि शिष्टात्मोपकाराय महीयसाम् ।
अब्धेरपामपाराणां, किं वृद्ध्यै नोदितः शशी ? ॥ २७५ ॥
कुपुत्रैः कुलविध्वंसो, जातमात्रैर्विधीयते ।
मूलादुन्मूलनाय स्यात्, कदल्यां फलसंभवः ॥ २७६ ॥
धने सत्यपि तेजस्वी, नैधते सुहृदं विना ।
पिधानरुद्धवातः किं, दीपः स्नेहे सुदीप्तिमान् ? ॥ २७७ ॥

१ अंशोः सूर्यस्य ॥

संपत्तौ च विपत्तौ च, महान् स्यात् समवैभवः ।
उदयेऽस्तमने चाऽपि, स्पष्टमूर्त्तिस्त्विषांपतिः ॥ २७८ ॥
मूर्खाणामग्रतो वाचां, विलासो वाग्मिनां सुधा ।
लास्यं वेषसृजां वन्ध्यं[1], पुरतोऽन्धसभासदाम् ॥ २७९ ॥
सुखदुःखे समं स्यातां, सुहृदां सहवासिनाम् ।
सहैवोन्नतिपतने, स्तनयोरेकहृत्स्थयोः ॥ २८० ॥
संबन्धेऽपि दुराचारचञ्चवः स्युरपण्डिताः ।
का सुता का स्वसा काम्बा, पशूनामविवेकिनाम्? ॥२८१॥
प्रातिवेश्मिकदुःखे स्युर्मृदूनामसमाधयः ।
जातायां मूर्ध्नि पीडायां, किं दृशोर्न त्विषाम्पतिः? ॥२८२॥
सेवाप्रह्वं भवेद्विश्वं, निष्ठुरेऽपि धनाद्भुते ।
कीटकैः क्लृप्तपीडायां, केतक्यां किमु नादरः? ॥ २८३ ॥
शुद्धात्मनि गतेऽपि स्यात्, स्थानं तद्भावभावितम् ।
किं विक्रीतेऽपि कर्पूरे, नास्पदं सौरभान्वितम्? ॥ २८४ ॥
नोज्झन्ति तद्गुणाः स्थानं, गतस्याऽपि दुरात्मनः ।
गन्धस्त्यजति किं पात्रं, निष्काशितेऽपि रामठे[2]? ॥२८५॥
अतिप्रेयान् महात्माऽपि, भवेन्नावसरं विना ।
यत्तक्रोदनवेलायां, शर्करा कर्करायते ॥ २८६ ॥
अधिकारात् स्यादर्थस्य, प्रतीतिः प्रतिभान्विता ।
रणे राजन्ति मातङ्गा, अत्र[3] कुञ्जरनिर्णयः[4] ॥ २८७ ॥

---

१ निष्फलम् । २ हिङ्गुनि 'हींग' इति प्रसिद्धे । ३ अत्र मातङ्गशब्दे । ४ कुञ्जराणां हस्तिनां निर्णयो निश्चयः; नत्वधिकाराभावादत्र मातङ्गशब्दे चाण्डालनिर्णय इति भावः ॥

सच्छिद्रै रसिकात्मभ्यः, कचिन्नादीयते रसः ।
नीरं नीराशयेभ्यः किं, चातकैः परिभुज्यते ? ॥ २८८ ॥
अहो ! तेजस्विनां कापि, कला कौशलपेशला ।
चिन्ता चिन्तानिवृत्तिश्च, दृग्भ्यामेवाऽवगम्यते ॥ २८९ ॥
सेवा तिष्ठतु दुष्टानां, दर्शनादपि भीतयः ।
प्रेक्षिता अपि किं सर्पाः, न संत्रासस्य कारणम् ? ॥२९०॥
अकीर्त्तिः पापसङ्गेऽपि, लघोः स्यान्न गरीयसः ।
विनश्येद्वायसैः पीते, तोये कुम्भश्च नो सरः ॥ २९१ ॥
अपि सत्सु कलावत्सु, पूज्यते पदमर्चिपाम् ।
नेन्दौ सत्यपि किं प्रातर्नमस्कुर्वन्ति भास्करम् ? ॥२९२॥
सत्यामप्यन्यसामग्र्यां, न स्यात् कालं विना फलम् ।
आविर्भूयाद् घृतं दुग्धात्, किं विना दिवसान्तरम्?॥२९३॥
कर्कशेष्वपि या तस्थौ, सतां वाक् सा च नाऽन्यथा ।
ये वर्णा ग्रावसूत्कीर्णा, भवेत्तेषां किमत्ययः? ॥ २९४ ॥
लघूनामपि वाहुल्यं, दोष्मतामप्यशर्मकृत् ।
दुःसहाः शकटोद्वाहे, धुर्याणां धूलयो न किम् ? ॥२९५॥
अन्तःसारे गतेऽप्युच्चैः, शुद्धात्मा मानमर्हति ।
हृतेऽपि नवनीते किं, न लोकैस्तक्रमादृतम् ? ॥ २९६ ॥
आत्मसात्कुरुते सिद्धिं, सर्वतः सरलः पुमान् ।
कूपस्तम्भो न किं लेभे, यानपात्रे प्रधानताम् ? ॥२९७॥
सरलोऽपि मुखे दुष्टस्त्रासकृज्जगतां मतः ।
कदाऽपि कोऽपि न काऽपि, कुन्ततः कलयेद्भियम्?॥२९८॥

१ भारवाहिनां वृषभाणामित्यर्थः । २ स्वाधीनीकरोति ॥

पापात्मानो निजार्थाय, परेषामसुखेच्छवः ।
घृताल्लाभाय तत्स्वामी, गवामिच्छति तुच्छताम् ॥ २९९ ॥
गते सारे मृदूनां स्यादवस्थास्पदमश्रियाम् ।
त्यक्तस्नेहास्तिलाः पश्य, खलतां प्रतिपेदिरे ॥ ३०० ॥
अल्पीयसाऽपि पापेन, विनश्येत् सुकृतं बहु ।
दुग्धं काञ्जिकलेशेन, भस्फुटेदतिबह्वपि ॥ ३०१ ॥
व्यसनेऽपि विमुञ्चन्ति, स्वकीया नहि कर्हिचित् ।
शुष्के सरसि तत्रैव, म्लानाः पङ्कजपङ्क्तयः ॥ ३०२ ॥
तनवः[1] पतिताः क्लेशे, त्यजन्ति चिरसौहृदम् ।
जन्मस्नेहः क्षणात्त्यक्तो, यन्त्रान्तःपतितैस्तिलैः ॥ ३०३ ॥
अल्पैर्निर्याति नोपायैर्नवीनाऽपि तमोमतिः ।
यत् सद्यस्कोऽपि किं नीलीरागोऽद्भिरगमत्[2] क्षितिम्?॥३०४॥
प्रचुरा प्रकृतिः प्रायः, प्रेक्ष्यते पापपूरिता ।
स्त्रीरूपो वाऽयं पुंरूपो, द्विधा दृष्टो नपुंसकः ॥ ३०५ ॥
अपि स्वच्छात्मनां नीचगामितां हन्ति कोऽपि न ।
वारिता केन किं क्वाऽपि, सलिलानामधोगतिः ? ॥ ३०६ ॥
दृढशेऽपि व्यथायोगे, पुरस्तात् साहसी भवेत् ।
अगत्वाऽपि प्रहारेषु, पाण्योर्युगलमग्रतः ॥ ३०७ ॥
अन्तःसारोऽप्यशुद्धात्मा, न कंचिद्वल्लभो भवेत् ।
काम्यश्चाण्डालकूपः किं, भूयसाऽप्यम्भसा भृतः ?॥३०८॥
सर्वे धर्माः पिधीयन्ते, दोषेणैकेन भूयसा ।
किं नाशं नेतरे वर्णाः, प्रयान्ति मलिनाम्बुना ? ॥३०९॥

---

१ तुच्छाः । २ नाशम् ॥

दुःस्पर्शपापवृत्तीनां, जडे स्यान्नेतरात्मनि ।
काकोत्सृष्टमपानीयं, पानीयं न पुनर्घृतम् ॥ ३१० ॥
न स्यान्मध्यस्थता शस्ता, कुस्थानैर्निर्मिता सती ।
यद्भवेत् प्राणवान् पण्डस्तुन्दे मध्यस्थतां दधत् ॥ ३११ ॥
नासन्नेऽपि रतिः पापे, तुङ्गे दूरेऽपि चादरः ।
निष्कास्यते गृहादोतुर्वनाच्चानीयते करी ॥ ३१२ ॥
गुणिसङ्गे कृते नूनमन्याः पुण्योपलब्धयः ।
चीरे परिहितेऽन्येषां, शृङ्गाराणां परिग्रहः ॥ ३१३ ॥
विनोपायेन वैदग्ध्यं, शिक्ष्यते सन्निधौ सताम् ।
मुधैवामोदलब्धिः स्यान्न किं सौगन्धिकापणे ? ॥ ३१४ ॥
एकोऽपि सुमना दत्ते, यं गुणं तं न पार्थिवाः ।
एकपुष्पेण सौरभ्यं, यन्न रत्नशतेन तत् ॥ ३१५ ॥
जातिसाम्येऽपि सर्वत्र, संपत्तिरतिरिच्यते ।
तरुत्वेऽप्यन्यवृक्षेभ्यश्चम्पको यद्विशिष्यते ॥ ३१६ ॥
गुणमुक्ताः स्वयंपापाः, परच्छिद्रगवेपिणः ।
वाणा वाणासनान्मुक्ता, निदर्शनमिहाऽभवत् ॥ ३१७ ॥
दौष्कर्यं जायते तुङ्गाच्छ्रयतां न च मुञ्चताम् ।
चिन्त्याऽत्र शैलशृङ्गेषु, क्रियारोहावरोहयोः ॥ ३१८ ॥
सर्वशक्त्याश्रितोऽनर्थहेतुः स्वोऽपि जडाशयः ।
स्यादन्तःपतितानां किं, कूपः स्वोऽपि न मृत्यवे ? ॥ ३१९ ॥
यदागमे भवेद्वृद्धिस्तन्नाशे चार्त्तिरर्हति ।
यौवनेऽभ्युन्नतौ तस्मिन्, गते च पतितौ स्तनौ ॥ ३२० ॥

करोति गुणवानेवोपकारं सर्वदा सखे ! ।
ग्रीष्मे प्रावृषि शीते च, त्राणकृत् पट एव यत् ॥ ३२१ ॥
ज्योतिष्मांश्छिद्रलीनोऽपि, स्यादणूनां प्रसिद्धये ।
यज्जालान्तरगे भानौ, ज्ञायन्ते रेणवोऽणवः ॥ ३२२ ॥
लघीयसाऽपि सुहृदा, मिलितेन बलोन्नतिः ।
फूत्कारेण हि सप्तार्चिः, प्राणपुष्टिं बिभर्त्ति यत् ॥ ३२३ ॥
क्वचिदाह्लादयेद्विश्वमपि जाड्यं कलावताम् ।
मुदे निशि न किं ग्रीष्मे, शीता अपि विधोः कराः? ॥३२४॥
सुखचिह्नमपि स्थानाऽभावाद्भवति कुत्सितम् ।
हसन् बाढस्वरेण स्यादपमानपदं पुमान् ॥ ३२५ ॥
कृत्वाऽरेरपि विनयं, दुर्दशां गमयेत् सुधीः ।
यद्वेतसः सरित्पूरं, नम्रीभूयातिवाहयेत् ॥ ३२६ ॥
यज्जातं तद्बभूवैव, का कार्या तत्प्रतिक्रिया ? ।
ब्रूहि भो ! मुण्डिते मूर्द्ध्नि, किं मुहूर्त्तावलोकनम् ? ॥ ३२७॥
सुखं च दुःखमथवा, यद्भूतं मा स्म चिन्तय ।
लोकोक्तिरपि यद्विप्रैर्नातीता वाच्यते तिथिः ॥ ३२८ ॥
कायेनैव श्रियां हानौ, वल्लभास्तुङ्गमूर्त्तयः ।
अपि पुष्पफलाऽभावे, शाखाभिश्चन्दना मुदे ॥ ३२९ ॥
लघूनां यत्र तत्राऽपि, निर्वृतिर्महतां न च ।
शशानां यत्र तत्राऽपि, यच्छाया न च हस्तिनाम् ॥३३०॥
नीचमध्योत्तमेषु स्यात्तुल्या दृग् विशदात्मनाम् ।
किं संक्रान्तिर्न[1] शीतांशोः, कूटकूपपयोधिषु ? ॥ ३३१ ॥

---

१ प्रतिबिम्बनम् ॥

मयाऽस्थापीति मावज्ञास्पदं तेजस्विनां कृथाः ।
स्वयमुद्दीपितो दीपो, हतोऽङ्गुल्या न किं दहेत् ? ॥३३२॥
नाऽलं स्वार्थेऽपि शुद्राः स्युः, परस्परमसङ्गताः ।
किं मिथो मिलनाभावे, दन्ताश्चर्वणचर्वणः[1] ? ॥ ३३३ ॥
दुष्टधीर्वर्द्धितो यत्र, भवेत्तत्स्थाननाशकृत् ।
अग्निः प्रोद्दीपितो यत्र, तद्दाहे नास्त्यनिर्णयः ॥ ३३४ ॥
इमाः स्त्रिय इतीमासु, मा स्म कुर्ववही(हे)लनम् ।
किमङ्गुलीर्विनाङ्गुष्ठः, कृत्यं कर्तुं किमप्यलम् ? ॥ ३३५ ॥
गतामवस्थां मा ध्याय, राज्ञि व्रतिनि योषिति ।
कौशेया भोजपूर्वा यत्, कृमिकर्दमलोमजाः ॥ ३३६ ॥
अपि पूर्वसुखं गच्छत्युत्सवेऽप्यमहात्मनाम् ।
दत्तहर्षासु वर्षासु, नाऽर्काणां[2] किमपत्रिता ॥ ३३७ ॥
पापवान् संगतः पापैः, स्यान्महानर्थकारणम् ।
खरैरुत्थापितः पांशुर्विशेषात् किं न पुण्यहृत् ? ॥ ३३८ ॥
अव्यक्ता अपि हृष्यन्ति, संरावरसशीलिताः ।
जहाति जननीगीतैर्न किं रुदितमर्भकः ? ॥ ३३९ ॥
विधत्ते कृत्यमुग्राणां, तुच्छोऽपि तत्परिच्छदः ।
न हि फेनस्य सन्तुष्टिः, स्यात्तदीयैस्तुषैरपि ? ॥ ३४० ॥
कलिः कलिकृतां पार्श्वे, स्थितानामप्यभूतये ।
वंशसंघर्षभूरग्निः, किं दहेन्नाऽखिलं वनम् ? ॥ ३४१ ॥
सुखचिह्नमपि स्थाने, प्राप्तमाह्लादयेज्जगत् ।
स्थितं किं कामकृन्नासीत्, सितं सितमुखीमुखे ? ॥३४२॥

---

१ चर्वणं चूर्णनं तेन वित्ताः । २ अर्कवृक्षाणाम् ॥

गुरौ पूर्णेऽपि निर्बुद्धिस्तद्धियां लातुमक्षमः ।
अप्यब्धौ लेहनश्रद्धा, रसना रसनालिहाम्[1] ॥ ३४३ ॥
खलैरेव[2] महात्मानः, क्रियन्ते रसनिर्भराः ।
आतपैरेव पच्यन्ते, यत्फलान्याम्रभूरुहाम् ॥ ३४४ ॥
महोत्सवाय मन्यन्ते, पापिनः पापसंस्तवम् ।
किं निर्भरं न नृत्यन्ति, बर्हिणो विषवीक्षणात्[3]? ॥ ३४५ ॥
समानत्वेऽपि भोगानां, विशेषः स्वस्वचिह्नयोः ।
भवेन्मैथुनतस्तृप्तिर्नराणां न च योषिताम् ॥ ३४६ ॥
गुणदोषसमत्वेऽपि, गुणख्यातिर्महात्मनाम् ।
रत्नकर्करमातृत्वे, रत्नगर्भा वसुन्धरा ॥ ३४७ ॥
चिह्नत्वे समानेऽपि, लज्जाया बीजमाकृतिः ।
स्त्रीणां स्त्रीणां न लज्जा स्यात्, पुंसां पुसां च भूयसी ॥३४८॥
धने गतेऽपि दौर्गत्यं, न कदाऽपि कलावताम् ।
प्रमीतेऽपि[4] भुजङ्गे किं, वैधव्यं पणसुभ्रुवाम् ? ॥ ३४९ ॥
ऐश्वर्यमूर्जदोजोभिर्धनैः परिजनैर्न च ।
एकोऽप्येणेशतां सिंहो, भुङ्क्ते नैणो मृगौघवान् ॥ ३५० ॥
दोर्ष्वेवादरः पुंसां, यत्र तत्राऽपि दृश्यते ।
तुल्येऽप्यर्थे वधूधाम्नि, विवोढुं यान्ति यद्वराः ॥ ३५१ ॥
दोष्मान्नारिवधोद्युक्तः, परिवारमपेक्षते ।
हतः करिघटामासीत्, कः सिंहस्य परिच्छदः? ॥ ३५२ ॥

---

१ कुक्कुराणाम् । २ आतपपक्षे रलयोरैक्यात् खरैस्तीक्ष्णैः । प्रस्तुते तु खलै-र्दुर्जनैः । ३ विषं जलं गरलं च । ४ जारे ( प्रमीते मृतेऽपि ) ॥

प्रभुता स्याददत्तैव, दोष्मतामतिशायिनी ।
आधिपत्यं मृगैर्दत्तं, किमु केसरिणामभूत्? ॥ ३५३ ॥
कोमलानामनर्थाय, व्यापारः कठिनात्मनाम् ।
न स्याद्भ्रमिर्घरट्टानां, कणानां दलनाय किम्? ॥ ३५४ ॥
येषां संपत्तयः प्रायस्तेषामेव विपत्तयः ।
हयेऽधिरोहः पुंसां स्यात्, पुंसां चांह्रिषु शृङ्खला ॥ ३५५ ॥
स्यात्तस्मिन्नेव संबन्धे, पृथक् नामाकृतेर्वशात् ।
यत्पितुः सोदरः काकः[1], स्वसा तस्य फई[2]इति च ॥ ३५६ ॥
प्रायः सापदमेवानुसरन्ति नरमापदः ।
यत्कलङ्किनमेवेन्दुं, क्षीणत्वमनुधावति ॥ ३५७ ॥
अप्युत्तुङ्गा गते सारे, भवन्ति नतिकारिणः ।
न दृष्टा यौवने याते, नम्रता किमुरोजयोः? ॥ ३५८ ॥
महतामपि केषाञ्चित्, फलं नाडम्बरोचितम् ।
तुच्छं फलं न किं दृष्टं, सद्विस्तारोद्भटे वटे? ॥ ३५९ ॥
स्वल्पसत्त्वैरपि स्त्रीणां, पराभूतिर्न सह्यते ।
पक्षिणोऽपि प्रकुर्वन्ति, स्वकलत्रकृते कलिम् ॥ ३६० ॥
द्विजिह्वा दम्भमुज्झन्ति, निजस्थाने समागताः ।
बिले बिलेशया[3]ः प्राप्ताः, किं न मुञ्चन्ति जिह्मताम्?॥३६१
लघूनामपि केषाञ्चिदात्मवि..................[4] ।
कृशाऽपि किं न कूष्माण्डी, दत्ते गुरुतरं फलम्? ॥३६२॥

---

१ पितुः सोदरो भ्राता 'काका' इति लोके कथ्यते। २ पितुर्भगिनी 'फई'ति लोके प्रसिद्धा। ३ सर्पाः। ४ अत्र पञ्चाक्षरी त्रुटिता ॥

संशये संम्पदां मानोन्नता एवासितानना: ।
पयोऽस्तु माऽस्तु वा [1]तौङ्गं, तारुण्ये स्यादुरोजयो:॥३६३॥
सङ्गं श्यामात्मनां मुञ्च, पदमुच्चैर्यदीहसे ।
तैलं त्यक्तखलं श्रीमन्मूर्द्धानमधिरोहति ॥ ३६४ ॥
भग्नता ज्ञायते सज्जीभूतेऽपि शिथिलात्मनि ।
लाक्षासङ्गोऽपि नाज्ञायि, भग्नोऽयमिति किं घटः?॥३६५॥
धन्यात्मा भग्नभावोऽपि, भवति प्रीतिमान् पुनः ।
भूतोऽपि दलशः स्वर्णकलशः सन्धिमेति यत् ॥ ३६६ ॥
गते प्रसिद्धिमूलेऽपि, गुणे सा स्यात् प्रभाभृताम् ।
[2]सहस्रपात्त्विषां प्रेयान्, पादहीनोऽपि संमतः ॥ ३६७ ॥
खेदिता अपि संशुद्धाः, स्युः परस्परसङ्गताः ।
मर्दिता अपि किं नोर्णतन्तवो मिलिता मिथः? ॥ ३६८ ॥
दत्तं ज्योतिष्मते वित्तं, सद्यः संपद्यते श्रिये ।
द्राग्दीपो निहिते स्नेहे, वस्तुव्रातं प्रकाशयेत् ॥ ३६९ ॥
कुपात्रे निहिते शास्त्रे, नाधाराधेययोः शुभम् ।
कुम्भेऽप्यामे जले न्यस्ते, नाशः स्यादुभयोरपि ॥ ३७० ॥
नाप्नोति द्युतिमान् मानं, विना सङ्गं लघीयसाम् ।
विना गुञ्जातुलां मूल्यं, क्वचित् काञ्चनमर्हति ?॥ ३७१ ॥
अंशोऽपि दुष्टदृष्टीनामन्येषां स्याद्विनाशकृत् ।
व्याघ्राणां वाललेशोऽपि, जग्धो जीवितहानये ॥ ३७२ ॥

---

१ उन्नतत्वम् । २ पादाभ्यां चरणाभ्यां हीनोऽपि त्विषां कान्तीनां प्रेयान् पतिः सूर्यः सहस्रपात् सहस्रपाद (किरण) विशिष्टः संमतः ॥

अतिस्वच्छात्मनामन्तर्वृत्तिर्विज्ञायते सुखम् ।
वस्तुनः काचपात्रान्तर्गतस्यावगमो न किम् ? ॥ ३७३ ॥

अन्तर्निहितसाराणां, गोपने प्रीतिरुत्तमा ।
यदीक्ष्यते महान् यत्नो, हृत्पिधाने मृगीदृशाम् ॥ ३७४ ॥

प्राप्तः परप्रियापार्श्वं, कलावानपि दुर्गतः ।
क्षीणत्वं याति किं नेन्दुः, पूर्वदिग्भागमागतः ? ॥ ३७५ ॥

कर्कशा अपि सत्पात्रसङ्गताः पारगामिनः ।
नाम्भोधिं यानपात्रस्था, दृषदोऽपि तरन्ति किम्?॥३७६॥

दुरात्मानश्चिरायुष्काः, प्रायशः स्युर्न चेतरे ।
चिरजीवित्वसंयुक्ता, वायसा न सितच्छदाः ॥ ३७७ ॥

शुचयो मण्डनं जन्म, भूमिगा वा परत्रगाः ।
दन्ता दन्तिमुखे भूषा, करे वा हरिणीदृशाम् ॥ ३७८ ॥

परिवारे प्रभूतेऽपि, दुःखं दुर्दैवदण्डिनाम् ।
छिद्यन्ते नहि बुब्बूलाः, कोटिशः कण्टकेषु किम्? ॥३७९॥

महापरिकराकीर्णो, लघीयानपि सत्फलः ।
बृहद्दलायां रम्भायां, लब्ध्यां किं नास्ततं फलम्? ॥३८०॥

त्वरयैव व्ययं याति, ज्योतिष्मानप्यसारभूः ।
तृणाज्जातस्य यद्वह्नेः, कियती स्यादवस्थितिः ? ॥ ३८१ ॥

फलं दत्तेऽतितुङ्गोऽपि, तुच्छं तुच्छपरिच्छदः ।
यद्बुब्बूले फलं फल्गु, गुरावप्यगुरुच्छदे ॥ ३८२ ॥

लभते हृत्सु सौहार्दं, स्थैर्यं नैवास्थिरात्मनाम् ।
पांसूनामुपरि न्यस्तैः, स्थीयते कियदक्षरैः ? ॥ ३८३ ॥

सान्द्रापि न स्थैर्यवती, प्रीतिः पारिप्लवात्मनाम् ।
अदभ्राऽपि किमभ्राणां, छाया न क्षणनश्वरी ? ॥ ३८४ ॥
नीचानामप्यवष्टम्भः, सापदां महतां हितः ।
अपि भग्नाः कार्यसृजो, जतुना संहिता घटाः ? ॥ ३८५ ॥
उद्धता अलमुद्धर्तुमौद्धत्यं दुरितात्मनाम् ।
क्षाराणामेव सामर्थ्यं, मलनाशाय वाससाम् ॥ ३८६ ॥
सङ्गताः कलये नूनं, कठिनाः कठिनात्मभिः ।
अग्निरुत्पद्यते सद्यः, संयोगे ग्रावलोहयोः ॥ ३८७ ॥
यत्र तिष्ठेत् कठोरात्मा, तत्राऽनर्थाय भूयसे ।
मध्येघण्टं स्थिता लाला, घण्टां हन्ति समन्ततः ॥ ३८८ ॥
गुणहारिणि मन्देऽपि, नश्यते गुरुणा सधीः ।
चिम्बन्यासः सुखाधेयः, पीवरेऽपि हि चीवरे ॥ ३८९ ॥
मध्यस्थः प्रतिभूः क्लृप्तः, स्याद्धिताय द्वयोरपि ।
देहल्यां निहितो दीपो, बहिर्मध्ये च तेजसे ॥ ३९० ॥
गुणस्तनोति स्वल्पोऽपि, मानं श्यामात्मनामपि ।
मधुरेण स्वरेणाऽपि, काम्यन्ते किं न कोकिलाः ? ॥ ३९१ ॥
तुङ्गेष्वपि विना दोषैर्न गुणाः स्थैर्यधारिणः ।
वालैरपि विना मौलौ, पुष्पाणां किमवस्थितिः ? ॥ ३९२ ॥
प्रस्तावोचितवाक्येन, कटुवागपि मान्यते ।
प्रस्थितैर्वामतः कूजन्, यत् काकः कीर्त्यतेऽनघः ॥ ३९३ ॥
भवेत्तेजस्विनां प्रायो, गुणस्तेजस्विनिर्मितः ।
दीपे चक्षुष्मतामेव, वस्तुजातं प्रकाश्यते ॥ ३९४ ॥

अनर्थं तनुते तुङ्गो, हसन् मनसि निष्ठुरः ।
तेजःस्तोमं वहन् वक्रे, न कुन्तः किमु मृत्यवे ? ॥ ३९५ ॥
नाप्रस्तावे वदन् वाक्यं, मान्यते मञ्जुगीरपि ।
गर्जन्नम्भोधरश्चारु, रोहिण्यां श्लाघ्यते न यत् ॥ ३९६ ॥
भर्त्तुर्वैरिणि वैरित्वमुचितं रुचिशालिनाम् ।
रवेर्घात्यं तमो हन्ति, दीपस्तल्लब्धदीधितिः ॥ ३९७ ॥
जडसङ्गोऽपि समये, क्लृप्तः श्रीहेतुरायतौ ।
स्थाने निर्मित एव स्यादन्यशृङ्गारसङ्गमः ॥ ३९८ ॥
येषामभ्युन्नतिस्तेषामेव प्रपतनं भवेत् ।
समुन्नतिं च पातं च, स्तना एवाप्नुवन्ति यत् ॥ ३९९ ॥
गुणवत्स्वेव पश्यामः, परोपद्रवरक्षिताम् ।
शक्तिर्यत् खेटकेष्वेव, विविधायुधवारिणी ॥ ४०० ॥
उत्सवेऽपि सदा प्रोच्चैः, स्तब्धानां स्यादनुत्सवः ।
यदाऽऽनन्दिनि संभोगे, मुष्टिघाता उरोजयोः ॥ ४०१ ॥
चपलात्मन्यपि प्रीताः, सन्तो दृग्रागमोहिताः ।
हित्वाम्रादितरूंस्तस्थौ, जगन्नाथो हि पिप्पले ॥ ४०२ ॥
लघीयानपि समये, महतां मानमर्हति ।
यद्गृह्यतेऽपि भूपालैर्लेखिनी लिखनक्षणे ॥ ४०३ ॥
देशे गुणवदादेशे, गुणी गच्छति गौरवम् ।
जनेषु वस्त्रयुक्तेषु, यत्पटो मूल्यमर्हति ॥ ४०४ ॥
कर्कशानां व्यथा वृद्धौ, मृदूनां च सुखोदयः ।
दन्तानां चर्वणाऽशर्म, जिह्वायाश्च रसागमः ॥ ४०५ ॥

---

१ मतान्तरेण लिखेः कुटादित्वाद् गुणाभावः ॥

आचारोज्झितमुज्झन्ति, रुचिमन्तमपि स्वकाः ।
ग्रहभर्त्ता परासक्तो, मुमुचे निचयै रुचाम् ॥ ४०६ ॥
स्वगुणं तनुते विष्वक्, कलावानेव वीक्षितः ।
शुक्लः पक्षो ह्यदृष्टेन, शुक्लप्रतिपदिन्दुना ॥ ४०७ ॥
कलाविलासिनो नैव, भवन्त्यसरलाः खलु ।
भजते वक्रभावं किं, क्वचित् कुमुदिनीपतिः ? ॥ ४०८ ॥
गतिर्भवति पापस्य, विपरीता जगज्जनात् ।
किं स्वर्भानुर्भ्रमन् दृष्टो, न संहारेण सर्वदा ? ॥ ४०९ ॥
स्नेहोऽप्यशर्मणां हेतुः, कृतः सन्तापकारिणि ।
अपि सर्प्पिः प्रदत्तं स्यादनर्थाय ज्वरातुरे ॥ ४१० ॥
सुखलक्ष्मीमुपामेव, विनये वपुरुत्सुकम् ।
शाखाफलवतामेव, शालीनां नतिशालिनी ॥ ४११ ॥
गुणेषु सत्स्वपि प्रीतिर्दोषेष्वेवासतां भवेत् ।
तटाकेऽम्भोजभव्येऽपि, भेकानां कर्दमः प्रियः ॥ ४१२ ॥
आचारेऽपि भृशाधिक्यमपि दोषाय जायते ।
अमुष्यार्थः सखे ! वृद्धौ, गुणेऽपि किमु नाऽजनि? ॥४१३
सङ्कुचेत्पापमुत्कर्षं, प्राप्ते तेजस्वितेजसि ।
न किमल्पीयसी छाया, भानौ मध्यमुपागते? ॥ ४१४ ॥
अन्तःश्यामात्मभिर्वित्तं, दीयतेऽङ्घ्रिभिराहतैः ।
कण्ठन्यस्तपदा एव, कूपा यच्छन्ति यज्जलम् ॥ ४१५ ॥
गुणित्वे सदृशे कीर्त्तिर्महतां न लघीयसाम् ।
रत्नवत्वेऽपि यद्रत्नाकरो वार्द्धिर्न रोहणः ॥ ४१६ ॥

---

१ राहुः । २ अत्र वृद्धिगुणौ व्याकरणप्रसिद्धौ संज्ञाविशेषौ ॥

अल्पस्याप्यागमे वृद्धिः, सद्भूयोऽप्यपचीयते ।
निदर्शनमिह स्पष्टं, कूपोदकसरोदके ॥ ४१७ ॥
परेषां विपदं प्रेक्ष्य, गर्वः कः संपदां सखे ! ।
पूर्वारघट्टघट्टयासीद्रिक्तान्यासां किमुत्सवः ? ॥ ४१८ ॥
न भवेत् स्वपरव्यक्तिः, कदाचित् क्रूरचेतसाम् ।
नाग्निः किं वंशजातोऽपि, सवंशारण्यदाहकृत् ? ॥ ४१९ ॥
सयत्नाः सौवमाहात्म्यरक्षणेऽपि महाशयाः ।
यत्कृता स्वाम्बुरक्षायै, नालिकेरैस्त्रिधा वृतिः ॥ ४२० ॥
वस्तु दत्तं भवेद्रम्यमपि तुच्छं महात्मने ।
क्षारमप्यम्बु मेघाय, वितीर्णं वरमब्धिना ॥ ४२१ ॥
या प्रवृत्तिर्भवेदाद्या, प्रसिद्धिं समुपैति सा ।
कृष्णः कृष्णेतरः पक्षो, मुखे तमसि तेजसि ॥ ४२२ ॥
महोऽन्यत्र स्थितं सिद्ध्यै, मृतस्याऽपि महस्विनः ।
नास्तस्याऽपि रवेर्भासः, किमालोकाय दीपकाः ? ॥ ४२३ ॥
जीवैः प्रायेण जीवद्भिर्विपत्तिरभिभूयते ।
क्षीणभावो निराकारि, न किं कुमुदबन्धुना ? ॥ ४२४ ॥
गुणाय समये क्रूरसङ्गोऽपि विशदात्मनाम् ।
दोषे स्याद्वोपपात्राणां, निहितः किं हुताशनः ? ॥ ४२५ ॥
रागवन्तो बहिस्तुच्छा, भवन्त्यन्तश्च नीरसाः ।
अयमर्थः स्फुटं गुञ्जाफलेषु ददृशे न कैः ? ॥ ४२६ ॥
वाल्लभ्यं न च कृत्येन, नावाल्लभ्यमकृत्यतः ।
बहुकार्येऽपि सा प्रीतिर्न लोहे या च काञ्चने ॥ ४२७ ॥

---

१ अत्र जलवाचिना दकशब्देन समासो ज्ञेयः । २ आत्मीय-॥

स्वच्छात्माऽपि स्वकैस्त्यक्तो, लाघवं द्रुतमश्नुते ।
न किं दध्नः पृथग्भूतं, नवनीतं तरत्यहो ? ॥ ४२८ ॥
यादृशैः सङ्गतिः संपद्दीयते तादृगेव तैः ।
दत्तः कज्जलदुग्धाभ्यां, सङ्गात् स्वस्वकुलेऽम्भसः (?)॥४२९
प्रवृत्तिश्च निवृत्तिश्च, स्वयमेवाऽमलात्मनाम् ।
अब्धेरद्रिरागमनं, यानं च कृतमात्मना ॥ ४३० ॥
महः करोति किं तुच्छे, वस्तुनि स्थितिमागतम् ? ।
तेजःस्तोमः किमाप्नोति, माहात्म्यं काचखण्डगम्?॥४३१॥
स्यात् परादाप्तवित्तोऽपि, महस्वी परकृत्यकृत् ।
न प्रदीपः प्रकाशाय, खेचराप्तप्रभोऽपि किम् ? ॥ ४३२ ॥
मिलिता अपि निःसाराः, प्रजायन्ते पुनर्द्विधा ।
जलैर्वद्धेषु यद्धूलीमोदकेष्वेव विस्तरः ॥ ४३३ ॥

( अथ श्लेष एव )

नीचो मुञ्चति नीचत्वं, वसन्नान्तः सतामपि ।
कलावन्मण्डपे तिष्ठन्, मृगो नोज्झत् कुरङ्गताम् ॥ ४३४ ॥
कुस्थाने सङ्गतिर्नूनं, व्यसनव्यापृतात्मनां ।
मधुपानां रजःस्वेव, वसतिर्ददृशे न कैः ? ॥ ४३५ ॥
किं करोति सतां सङ्गः, पातधर्माधिकारिणाम् ? ।
पश्य मुक्ताश्रिताः कान्ताकुचाः श्वेतेतराननाः ॥ ४३६ ॥
धत्ते चित्ते न संवासं, विवेको जडवासिनाम् ।
भजत्यम्भोजिनीं हंसः, पवित्रोऽपि रजस्वलाम् ॥ ४३७ ॥
शुभाशुभविचारोऽपि, न भवेत्पण्ढ¹चेतसि ।

---

1 पण्ढः शिवोऽपि ॥

जगत्प्रियमपीशानः, कलाकेलिमदीदहत् ॥ ४३८ ॥
कुकुलं हन्ति सद्बुद्धिं, नानीतां शुभकर्मभिः ।
निषेवते दिवानक्तं, गोपेन्द्रोऽपि रसाधिपम् ॥ ४३९ ॥
महत्यपि भवेत्प्रायः, कुसङ्गाद्दोषसङ्गमः ।
कलावत्यपि जातोऽयं, कलङ्को विपवासतः ॥ ४४० ॥
परित्यागः कुसङ्गस्य, कृतिनामपि दुष्करः ।
अस्ति स्थितिः सुरागारे, यतः सुमनसामपि ॥ ४४१ ॥
निष्कृपा अपि........[1].... वल्लभा वित्तशालिनः ।
जनार्द्दनोऽपि यज्जज्ञे, श्रीपतिर्जगतां प्रियः ४४२ ॥
अपि प्रवयसां पुंसां, दुर्द्धरा ब्रह्मचारिता ।
सरोजजन्मा किं नासीत्, स्थविरोऽपि प्रजापतिः? ॥४४३॥
न संस्तवेऽपि पुण्यानां, पापधीर्याति पापिनाम् ।
नास्ता मधुपता भृङ्गैः, सङ्गे सुमनसामपि ॥ ४४४ ॥
व्यापारो यादृशो यस्य, तस्मात्तादृक् फलागमः ।
न स्नेहनाशिना चक्रे, किं दीपेनासितं कुलम्? ॥ ४४५ ॥
खलानां खलता याति, स (न) सत्सङ्गस्पृजामपि ।
सर्वज्ञसङ्गिभिस्त्यक्ता, न द्विजिह्वैर्द्विजिह्वता ॥ ४४६ ॥
सार्धं हि धार्मिकैरेव, विरोधः पापिनां महान् ।
विश्वेऽस्मिन् वहते वैरं, कलावत्येव यत्तमः ॥ ४४७ ॥
क्वचिद्वस्तुविशेषे स्यात्, सङ्गमो गुणदोषयोः ।
सति दोषाकरत्वेऽपि, कलावत्त्वं न किं विधौ? ॥ ४४८ ॥
धने सत्यपि तद्भोगो, नैवाभाग्यभृतां भवेत् ।

---

१ अत्राक्षरत्रयं त्रुटितम् ॥

यद्दिगम्बर एवासीदीश्वरोऽपि महानटः ॥ ४४९ ॥
सखे ! दोषजुषां द्वेषः, स्वजनेऽपि प्रजायते ।
भक्तेऽप्यभावस्तोषस्य, न किं ज्वरभृतामभूत् ? ॥ ४५० ॥
भवेद्विद्यागमोऽवश्यं, छात्रे गुरोर्धियां निधेः ।
किं वाक्पतेर्विनेयानां, न वैबुध्यमजायत ? ॥ ४५१ ॥
ध्रुवं स्यान्मानतुङ्गानां, विपत्तिरपि संपदे ।
करपीडावतोरासीत्, सौभाग्यं स्तनयोर्न किम् ? ॥ ४५२ ॥
मध्ये ध्वस्तधियामेव, स्थानं व्यसनवासिनाम् ।
क्रीडन्ति जलजातान्तर्मधुपाः प्रतिवासरम् ॥ ४५३ ॥
विद्वानास्तां तदावासे, वासोऽपि विबुधत्वकृत् ।
द्विजागारे[1] मुखे प्राप्ता, यद्रसज्ञा[2] रसोऽप्यभूत् ॥ ४५४ ॥
प्रायः प्रवर्द्धते प्रीतिः, सखे ! सदृशसंपदाम् ।
किं राज्ञा सहसौहार्दं, बहासीन्न रसेशितुः[3] ? ॥ ४५५ ॥
ईशानां गुणनाशेऽपि, गुणख्यातिरनश्वरी ।
यमध्वंस्यपि विख्यातो, महादेवो महाव्रती ॥ ४५६ ॥
साक्षरैः सममारब्धमत्सराः स्युर्निरक्षराः ।
वाग्देव्यां वहते वैरं, न किं गोविन्दगेहिनी ? ॥ ४५७ ॥
वासदोषः सखेऽवश्यं, शुद्धात्मन्यपि जायते ।
जाड्यं जडनिवासित्वाद्, द्विजराजेऽप्यभून्न किम् ? ॥४५८॥
न हृष्यन्त्यसितात्मानः, संपत्तौ सुकृतात्मनाम् ।
मुद्रिते काकपाकानां[4], द्विजराजोदये दृशौ ॥ ४५९ ॥

---

१ द्विजाः दन्ताः ब्राह्मणाश्च । २ जिह्वा । ३ समुद्रस्य राज्ञश्च ( राज्ञा चन्द्रेण नृपेण च ) । ४ काकशिशूनाम् ॥

पापिनां पापिभिः सार्कं, सङ्गः सङ्गतिमङ्गति ।
वयस्य ! पश्य मातङ्गैः, सङ्गतान् मधुपानिमान् ॥ ४६० ॥
अनधीतवाङ्मयानां, वक्रा भवति पद्धतिः ।
यदश्रुतय एवेह, यान्ति जिह्मा दिवानिशम् ॥ ४६१ ॥
धने स्वल्पेऽपि तुङ्गानां, धनित्वख्यातिरद्भुता ।
ऐश्वर्यश्रुतिरेकस्मिन्, वृषभे वृषभेशितुः ॥ ४६२ ॥
अचेतनेनैव प्रीतिप्रवृत्तिर्धनिनां ध्रुवम् ।
किं स्थाणुना समं मैत्री, धनाधीशस्य नाऽभवत् ? ॥४६३॥
रतिर्जडजुषां नीचमिलनेऽप्यतिशायिनी ।
न किं गोपकराश्लेषात्, पद्मिनी प्रीतिमत्यभूत् ? ॥ ४६४ ॥
धत्ते धनवति प्रीतिं, सदोपेऽपि महाजनः ।
व्यधान्मैत्रीं कुबेरेऽपि, धनाधीशे महेश्वरः ॥ ४६५ ॥
अधनित्वे सति प्रायः, स्त्रीः कुरूपैति वेश्मनि ।
दिग्वासाः प्राणिताधीशः, काली गेहे च गेहिनी ॥४६६॥
महस्विनां महोहान्यै, मिलितः स्यात् खलः खलु ।
द्विजिह्वदर्शनादासीत्, प्रदीपे दीप्तिमन्दता ॥ ४६७ ॥
मतिरास्तां प्रमीलाऽपि, प्रभूणां कृत्यहानये ।
न किं कार्यनिषेधोऽभूत्, प्रसुप्ते पुरुषोत्तमे ? ॥ ४६८ ॥
निर्धनोऽपि महान् प्रायो, महत्वख्यातिभाग् भवेत् ।
कथितोऽनेकपः किं नोदरम्भरिरपि द्विपः ? ॥ ४६९ ॥
गृहस्थानोचिता पर्षत्, जायते महतामपि ।
श्मशानवेश्मनः पार्श्वे, शिवा तिष्ठति सर्वदा ॥ ४७० ॥

१ सर्पाः वेदाऽनभिज्ञाश्च । २ शिवः । ३ शिवस्य, श्मशानरूपगृहस्य च । ४ पार्वती, शृगालश्च ॥

वसन् मूर्खेष्वमूर्खोऽपि, पशुरेवाभिधीयते ।
जडजातासनो ब्रह्माऽप्यजं[1] एव मतः सताम् ॥ ४७१ ॥
श्यामात्मनि विशुद्धात्मा, सङ्गतोऽनर्थसूचकः ।
प्रादुर्भूतं न किं पुष्पं[2], नयने हन्ति सौष्ठवम् ? ॥ ४७२ ॥
संवासिजनतुल्यं स्याद्वैदग्ध्यं महतामपि ।
द्विजेशोऽपि[3] जडात्माऽभूद्यद्गोविन्दपदे[4] वसन् ॥ ४७३ ॥
दोष्मतामप्यसद्वस्तु, वस्तुतः सन्निरूप्यते ।
रूपं रम्यमिति प्राहुरनङ्गस्यापि यद्भुवः[5] ॥ ४७४ ॥
संबन्धः सदृशामेव, प्रायशो दृश्यते दृढः ।
अभवद्भैरवस्यैव, चण्डिका गृहिणी गृहे ॥ ४७५ ॥
शिष्या निर्व्यसना एव, भवन्ति विदुषां सखे ! ।
विनेया असुरा[6] एव, कवेः सन्ति सहस्रशः ॥ ४७६ ॥
निरक्षरोऽपि भूयोभिर्वित्तैर्गच्छति गौरवम् ।
गोपेन्द्रोऽप्यभवल्लक्ष्मीपतित्वात् पुरुषोत्तमः ॥ ४७७ ॥

अथोपदेशः ।

शीललीलासखं रूपं, विद्या विनयवाहिनी ।
वित्तं वितरणाधीनं, ध्रुवं धन्यस्य कस्यचित् ॥ ४७८ ॥
संपत्तिः साहसं शीलं, सौभाग्यं संयमः शमः ।
सङ्गतिः सह शास्त्रज्ञैः, सकाराः सप्त दुर्लभाः ॥ ४७९ ॥
विवेको विनयो विद्या, वैराग्यं विभवो व्रतम् ।

---

१ ब्रह्मा छागश्च । २ 'फूला'इति प्रसिद्धो नेत्ररोगः। ३ चन्द्रोऽपि । ४ गोविन्दपदं आकाशमपि । ५ जगन्ति । ६ सुरा (मदिरा) पानराहित्यात्तेषां निर्व्यसनत्वमिति ध्वन्यते ।

विज्ञानं विश्ववाल्लभ्यं, फलं सुकृतवीरुधः ॥ ४८० ॥
यद्राज्यं न्यायसम्पन्नं, यच्छक्तिः शमशालिनी ।
यौवनं शीलरम्यं यत्तदुग्धं शर्करान्वितम् ॥ ४८१ ॥
यद्वक्ता धर्मशास्त्रज्ञो, यत्कविः सत्यभापकः ।
वल्लभो यद्विनीतात्मा, स शङ्खः क्षीरपूरितः ॥ ४८२ ॥
स्थाने स्थितिर्मतिर्मान्या, रम्यं रूपं धनं घनम् ।
वलं वहुवचो वर्य्यं, पुंसां पुण्यवतां भवेत् ॥ ४८३ ॥
सौजन्यं सङ्गतिः सद्भिः, शान्तिरिन्द्रियसंयमः ।
आत्मनिन्दा परश्लाघा, पन्थाः पुण्यवतामयम् ॥ ४८४ ।
करे दानं हृदि ध्यानं, मुखे मौनं गृहे धनम् ।
तीर्थे यानं गिरि ज्ञानं, मण्डनं महतामिदम् ॥ ४८५ ॥
धर्म्मे कृपा गुरौ ब्रह्म, देवे विगतरागता ।
मित्रे प्रीतिर्नृपे नीतिः, सक्तुमध्ये लुठत्कृतम् ॥ ४८६ ॥
पूजाऽर्हतां गुरोः सेवा, सर्वज्ञवचसां श्रुतिः ।
पात्रे दानं सतां सङ्गः, फलं मनुजजन्मनः ॥ ४८७ ॥
विभवे सति सन्तोपः, संयमः सति यौवने ।
पाण्डित्ये सति नम्रत्वं, हीरोऽयं कनकोपरि ॥ ४८८ ॥
अर्हन्नतिर्गुरुप्रीतिर्विरतिर्निजयोपिति ।
धर्मश्रुतिर्गुणासक्तिः, सद्यो यच्छति निर्वृतिम् ॥ ४८९ ॥
दाने शक्तिः श्रुते भक्तिर्गुरूपास्तिर्गुणे रतिः ।
दमे मतिर्दयावृत्तिः, पडमी सुकृताङ्कुराः ॥ ४९० ॥
जैनो धर्मः कुले जन्म, शुभ्रा कीर्त्तिः शुभा मतिः ।
गुणे रागः श्रियां त्यागः, पूर्वपुण्यैरवाप्यते ॥ ४९१ ॥

देवो दलितरागारिर्गुरुस्त्यक्तपरिग्रहः ।
धर्मः प्रगुणकारुण्यो, मुक्तिमूलमिदं मतम् ॥ ४९२ ॥
आरोग्यं दत्तसौभाग्यं, जीवितं कीर्त्तिपावितम् ।
भोगान् सुभगसंयोगान्, लभन्ते धर्मकर्मठाः ॥ ४९३ ॥
सन्ततिः शुद्धसौजन्या, विभूतिर्भोगभासुरा ।
विद्या विनयविख्याता, फलं धर्मतरोरिदम् ॥ ४९४ ॥
दानं दहति दौर्गत्यं, शीलं सृजति संपदम् ।
तपस्तनोति तेजांसि, भावो भवति भूतये ॥ ४९५ ॥
दीर्घमायुर्यशश्चारु, शुद्धिं बुद्धिं शुभां श्रियम् ।
प्राज्यं राज्यं सुखं शश्वद्दत्ते धर्मसुरद्रुमः ॥ ४९६ ॥
घटाः कामघटाः सर्वे, धेनवः कामधेनवः ।
वृक्षाः स्वर्गसदां वृक्षाः, सदा सुकृतशालिनाम् ॥ ४९७ ॥
सुवर्णमणिराजिष्णुः, सर्वालङ्कारशोभना ।
सूक्तरत्नावलिरियं, नानाभावविभासुरा ॥ ४९८ ॥
कृतिततिचित्तचमत्कृतिकारिगुणा कान्तकान्तिकमनीया ।
नयनिपुणवचनरचना, सुन्दरतरवृत्तभावमध्यमणिः॥४९९॥
वर्षे मुनियुगनरपतिमिते तपागच्छजलधिशशिसदृशैः ।
श्रीविजयसेनसूरिद्विरदैर्निरमायि निर्मायैः ॥ ५०० ॥
कण्ठपीठे लुठत्येषा, यदीये गुणहारिणी ।
मनांसि मोहयेन्नूनं, स सभाहरिणीदृशाम् ॥ ५०१ ॥
यस्याम्रमञ्जरीवैषा, तिष्ठत्यामोददा मुखे ।
कामोत्सवाय जायेत, कोकिलास्ये वं तस्य वाक् ॥ ५०२ ॥

१ अत्र व शब्द इवार्थे ।

यदि नीतिमृगीनेत्रामात्मसात्कर्तुमीहसे ।
निधेहि तदिमां कण्ठे, संवननौषधीमिव[1] ॥ ५०३ ॥
चिरं चित्तचमत्कारिसूक्तरत्नमनोज्ञया ।
कण्ठस्थयाऽनया नूनं, वक्ता स्यात् सभ्यवल्लभः ॥ ५०४ ॥
स्याद्विशारदवृन्दान्तः, स्थातुं वक्तुं च चेन्मनः ।
तदा सुकृतियोग्यैषा, कण्ठपीठे निधीयताम् ॥ ५०५ ॥
एतस्याः सूक्तमप्येकं, नरः कण्ठे बिभर्त्ति यः ।
लोकानुल्लासयेत्सोऽपि, चकोरानिव चन्द्रमाः ॥ ५०६ ॥
भूरिभावावभासैकदिनेशद्युतितुल्यया ।
अनया श्लिष्टकण्ठः स्यात्, पुमर्थेषु समर्थधीः ॥ ५०७ ॥
अगाधरसनिस्पन्दधारिणी पापवारिणी ।
एषा पुनातु गङ्गेव, सर्वं सर्वज्ञवल्लभा ॥ ५०८ ॥
अलङ्करोति यत्कण्ठपीठमेषा मनोरमा ।
तानभ्यायान्ति सोत्कण्ठं, सर्वाः स्वयंवराः श्रियः ॥ ५०९ ॥
नानावाङ्मयमाणिक्यपरीक्षणविचक्षणैः ।
श्रीलाभविजयाह्वानैरशोधि विबुधैरियम् ॥ ५१० ॥
यावदम्बुरुहां बन्धुर्गाहते गगनाङ्गणम् ।
कण्ठे स्थिता तावदसौ, चिरं सौभाग्यमश्नुताम् ॥ ५११ ॥

इति श्रीतपागच्छाधिराजभट्टारकसार्वभौमभट्टारकश्रीहीरविजयसूरीश्वरपट्टालङ्कारश्रीविजयसेनसूरिविरचिता-
सूक्तरत्नावली संपूर्णा ॥ श्रीरस्तु ॥

---

१ वशीकरणौषधम् ।